Bill No. 2/07-08

137.

2008-0150

संगीत पारिजात of अहोबल पंडित - Edited and Published by रावजी श्रीधर गोंधलेकर - very brittle condition, so the total pages are Tissued. Poona, 1819 Saka era.

1400

20



खिचड़ी, तिल-गुड़...

की आभासित गति।

सर्वाधित काया की आवश्यकता है। दीपावली पर्व जहां परिवेश की शुद्धता पर बल देता है, वहीं मकर संक्रान्ति तिल, गुड़पूर्ण घट संवर्धित काया के शुद्धि पर बल देता है। खिचड़ी का भोजन इस दिन विशेष महत्व रखता है। इसके पीछे वैज्ञानिक अवधारणा यह है कि उत्तरायण सूर्य की

त्रिवेणी उपस्थित कर देता है। इस प्रकार भारतीय ...निकों, वैज्ञानिकों की अवधारणाओं तथा पाश्चात्य वैज्ञानिकों, चिन्तकों का निष्कर्ष

# संगीतपारिजातः ।

श्रीकृष्णपंडितसुताहोबलपंडितविरचितः ।

एतत्पुस्तकं

## रावजी श्रीधर गोंधळेकर

इत्यनें

पुण्याख्यपत्तनस्थे 'जगद्धितेच्छु' नाम्नि स्वकीये
मुद्रणयन्त्रालये मुद्राप्य

प्राकाश्यं नीतः ।

---

तस्येयं प्रथमाङ्कनावृत्तिः ।

---

शालिवाहन शके १८१९.

श्रीमदहोबलपण्डितविरचितः

# संगीतपारिजातः ।



छन्दोमयं गरुत्मन्तमारूढं सत्यया सह ।
स्तूयमानं दिवौकोभिः पारिजातहरिं भजे ॥ १ ॥
संगीतपारिजातोऽयं सर्वकामप्रदो नृणाम् ।
अहोबलेन विदुषा क्रियते सर्वसिद्धये ॥ २ ॥
संगीतं वैदिकैर्वाक्यैर्बोधितं ब्रह्मणा सदा ।
कृत्वैहिकं तथा मोक्षं प्राप्नुवन्ति त्वरान्विताः ॥ ३ ॥
अग्निहोत्रं यथा कार्यं गानकार्यं तथैव हि ।
वेदोक्तत्वात्स्मृतिप्रोक्तकर्तव्यत्वान्मनीषिभिः ॥ ४ ॥
विष्णुनामानि पुण्यानि सुस्वरैरन्वितानि चेत् ।
भवन्ति सामतुल्यानि कीर्तितानि मनीषिभिः ॥ ५ ॥
स्वाश्रया मोहिनी माया या तया संवृताश्च ये[3] ।
ब्रह्मविष्णुमहेशाः स्युः संगीतोत्थसुखस्पृहाः ॥ ६ ॥
ऐहिकामुष्मिके त्यक्त्वा देवर्षिर्नारदः सदा ।
ब्रह्मानन्दोऽपि वीणायां वादने नियतोऽभवत् ॥ ७ ॥
अतीतानागतज्ञानी ब्रह्मज्ञो वीतकिल्बिषः ।
भरतोऽपि मुनिश्रेष्ठः संगीते निरतोऽभवत् ॥ ८ ॥
संगीतनिरता नित्यवाद्यानन्दस्वरूपिणी ।
तथा सरस्वती वीणावादने निरताऽभवत् ॥ ९ ॥

---

१ ब्राह्मणाः । २ दिव्यानि । ३ ते ।

दैत्यसंहारिणी दुर्गा संगीतेऽभिरता सदा ।
मतङ्गकश्यपावास्तां संगीताभिरुची मुनी ॥ १० ॥
कर्ता संगीतशास्त्रस्य हनूमांश्च महाकपिः ।
शार्दूलकोहलवितौ संगीतग्रन्थकारिणौ ॥ ११ ॥
कम्बलाश्वतरौ वायुर्हाहा हूहूश्च रावणः ।
रम्भा बाणसुता चोषा फाल्गुनः फणिनां पतिः ॥ १२ ॥
इत्येतेऽन्येऽपि संगीतशास्त्रव्याख्यानकारिणः ।
संगीतपारिजाताख्यमहं कुर्वेऽनुसृत्य तान् ॥ १३ ॥
दोलायां शायितो बालो रुदन्नास्ते यदा क्वचित् ।
तदा गीतामृतं पीत्वा हर्षोत्कर्षं प्रपद्यते ॥ १४ ॥
मृगः सोऽपि तृणाहारो विचरन्नटवीं सदा ।
लुब्धकादपि संगीतं श्रुत्वा प्राणान्प्रयच्छति ॥ १५ ॥
क्रुद्धो विषं वमन्सर्पः फणामान्दोलयन्मुहुः ।
गानं जाङ्गलिकाच्छ्रुत्वा हर्षोत्कर्षं प्रपद्यते ॥ १६ ॥
देवस्य मानवो गानं वाद्यं नृत्यमतन्द्रितः ।
कुर्याद्विष्णोः प्रसादार्थमिति शास्त्रे प्रकीर्तितम् ॥ १७ ॥
नाहं वसामि वैकुण्ठे योगिनां हृदये रवौ ।
मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद ॥ १८ ॥

श्रृण्वन्सुभद्राणि रथाङ्गपाणे-
र्जन्मानि कर्माणि च यानि लोके ।
गीतानि नामानि तदर्थकानि
गायन्विलज्जो विचरेदसङ्गः ॥ १९ ॥

वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः ।
तालज्ञश्चाप्रयासेन मोक्षमार्गं नियच्छति ॥ २० ॥

---

१ न च । २ ०द । गायन्मु । ३ प्रयच्छति ।

वेदे तथैव संप्रोक्तं गायेतां ब्राह्मणाविति ।
क्वणयन्तावुभौ वीणामश्वमेधेऽतिसुस्वरम् ॥ २१ ॥
गीतवादित्रनृत्यानां त्रयं संगीतमुच्यते ।
गानस्यात्र प्रधानत्वात्तत्संगीतमितीरितम् ॥ २२ ॥
मार्गदेशीयभेदेन द्वेधा संगीतमुच्यते ।
वेधा मार्गाख्यसंगीतं भरतायाब्रवीत्स्वयम् ॥ २३ ॥
ब्रह्मणोऽधीत्य भरतः संगीतं मार्गसंज्ञि तत् ।
अप्सरोभिश्च गन्धर्वैः शंभोरग्रे प्रयुक्तवान् ॥ २४ ॥
ततोऽपि ताण्डवं ज्ञात्वा लास्यं ज्ञात्वोमयोदितम् ।
तत्सर्वं शिष्यसंघेभ्यः प्रोक्तवान्भरतो मुनिः ॥ २५ ॥
तद्देशीयमिति प्राहुः संगीतं देशभेदतः ।
तद्द्वयं सुस्वरैस्तानैरुपेतं सुखसाधनम् ॥ २६ ॥
विनोद्देशं विना लक्ष्म परीक्षां च विना क्वचित् ।
शास्त्रं न वर्तते यस्मात्तस्मात्ताः प्रब्रवीम्यहम् ॥ २७ ॥
पाञ्चभौतिकदेहेऽस्मिन्नूर्ध्वं नाड्यस्ततः परम् ।
तिर्यङ्नाड्यश्च स्थानानि चक्राण्युक्तानि तत्र तु ॥२८॥
नादोत्पत्तिः स्वरव्यक्तिस्तासु जातिव्यवस्थितिः ।
स्वरस्थितिर्विशुद्धानां विकृतानां च निर्णयः ॥ २९ ॥
स्वरो वादी च संवादी चानुवादी विवाद्यपि ।
कुलानि जातयो वर्णा द्वीपानि मुनिदेवते ॥ ३० ॥
छन्दांसि च रसा ह्येते ग्रामास्तु मूर्छनाततो ।
प्रस्तारिताश्च कूटाः स्युः खण्डभेदस्ततः परम् ॥ ३१ ॥
नष्टोद्दिष्टे च तानानां चतुर्णां वर्णलक्षणम् ।
नानाविधा अलंकारा जातीनां लक्षणान्यपि ॥ ३२ ॥
अंशस्वराः कपालानि कम्बलं गमकास्तथा ।

१ गीयतां । २ °त्वा ज्ञात्वा लास्यं म° । ३ °स्तालैरु° ।

स्वरस्थानानि सर्वे ते मेलाः पञ्चापि गीतयः ॥ ३३ ॥
नामधेयानि रागाणां लक्षणान्यपि सर्वशः ।
प्रबन्धलक्षणं चात्र लक्ष्म वाग्गेयकारिणः ॥ ३४ ॥
गायनस्य गुणा दोषा इति काण्डेऽर्थसंग्रहः ॥ ३५ ॥

इत्युद्देशः ।

ऊर्ध्वस्थितत्रिनाडीषु नाड्यस्तिर्यग्हृदि स्थिताः ।
द्वाविंशतिमिताश्चेति प्राचीना मुनयोऽब्रुवन् ॥ ३६ ॥
पूर्वं नाभिस्ततो हृत्स्यात्पश्चात्कण्ठः प्रकीर्तितः ।
अथ मूर्धा तथाऽऽस्यं स्यादिति स्थानानि मेनिरे॥३७॥
हृद्यनाहतचक्रेऽस्मिन्ननिलानलयोगतः ।
आहतस्तत्र नादः स्यादिति शास्त्रे प्रकीर्तितम् ॥ ३८ ॥
कण्ठे विशुद्धचक्रं स्यात्सहस्रारं तु मूर्धनि ।
मन्द्रमध्यमताराख्या भवेयुस्तेषु तु क्रमात् ॥ ३९ ॥
श्रुतयः स्युः स्वराभिन्नाः श्रावणत्वेन हेतुना ।
अहिकुण्डलिवत्तत्र भेदोक्तिः शास्त्रसंमता ॥ ४० ॥
सर्वाश्च श्रुतयस्तत्तद्रागेषु स्वरतां गताः ।
रागहेतुत्व एतासां श्रुतिसंज्ञैव संमता ॥ ४१ ॥
केशाग्र्यव्यवधानेन बह्व्योऽपि श्रुतयः श्रिताः ।
वीणायां च तथा गात्रे संगीतज्ञानिनां मते ॥ ४२ ॥
मध्ये पूर्वोत्तराबद्धवीणायां गात्र एव वा ।
षड्जपञ्चमभावेन श्रुतीर्द्वाविंशतिं जगुः ॥ ४३ ॥
द्वाविंशतिश्रुतीनां च व्यवहारप्रसिद्धये ।
तासां नामानि वक्ष्येऽहं नारदीयानुसारतः ॥ ४४ ॥
तीव्रा कुमुद्वती मन्दा छन्दोवत्यस्तु षड्जगाः ।
दयावती तु रेञ्जैया रञ्जनी रक्तिकेत्यमू ॥ ४५ ॥

१ गाने । २ च

रौद्री क्रोधेति गान्धारेर्वज्रिकाऽथ प्रसारिणी ।
प्रीतिश्च मार्जनीत्येताः श्रुतयो मध्यमाश्रिताः ॥ ४६ ॥
क्षिती रक्ता च संदीपिन्यालापिन्यथ पञ्चमे ।
मदन्ती रोहिणी रम्येत्येतास्तिस्रस्तु धैवते ॥ ४७ ॥
उग्रा च क्षोभिणीति द्वे निषादे वसतः श्रुती ।
इत्येताः सप्तसु प्रोक्ताः स्वरेषु श्रुतयो बुधैः ॥ ४८ ॥
श्रुतीर्विनैकया श्रुत्या यदि षड्जः प्रजायते ।
तदा तयाऽन्यथा सिद्धाः श्रुतयस्ता भवन्ति हि ॥४९॥
एवमेवान्यथा सिद्धिः सर्वत्र श्रुतिषु स्थिता ।
स्वराश्चेद्यदि जायेरन्नेकश्रुत्या कथं भवेत् ॥ ५० ॥
सत्यं षड्जश्चतुर्धा स्यान्मृदुत्वादिविशेषणैः ।
तत्तज्जातिविशिष्टत्वान्नान्यथा सिद्धिरञ्जसा ॥ ५१ ॥
अवच्छेदकभेदेन कार्यतायाः पृथक्त्वतः ।
तृणारणिमणिन्यायात्कारणत्वं भवेदिह ॥ ५२ ॥
दीप्तेति चाऽऽयताख्येति करुणेति मृदुस्त्विति ।
मध्येति जातयस्तत्तत्स्वरस्थश्रुतिसंख्यया ॥ ५३ ॥
अथ दीप्ता च तीव्रायां कुमुद्वत्यां तथाऽऽयता ।
मन्दायां च मृदुर्ज्ञेया मध्या छन्दोवती श्रिता (१)॥५४॥
करुणा च दयावत्यां मध्या सा रञ्जनीश्रिता ।
रतिकायां भवेज्जातिर्मृदुसंज्ञा ततः परम् (२) ॥५५॥
रौद्रायां दीप्ता विज्ञेया क्रोधायामायता स्मृता ।
वज्रिकायां तु दीप्ता स्यात्(३) प्रसारिण्यां तथाऽऽयता ५६
प्रीत्यां श्रुत्यां मृदुः प्रोक्ता मध्या सा मार्जनीश्रिता (४)।
क्षित्यामुक्ता मृदुर्जातिर्मध्या रक्तासमाश्रिता ॥ ५७ ॥

---

१ इत्युक्ताः । २ ०द्धिरासुरा । अ० । ३ ०थक्कृतः । द्व०
४ प्रीत्याख्यायां मृ० ।

संदीपिन्यां तथा श्रुत्यामायता जातिरीरिता ।
आलापिन्यां तथा श्रुत्यां करुणा जातिरुच्यते(५)॥५८॥
मदन्त्यां करुणा ज्ञेया रोहिण्यामायता स्थिता ।
रम्या मध्याश्रिता जातिरिति[1] सूरिविनिश्चयः (६)॥५९॥
उग्रायां च भवेद्दीप्ता[2] मध्या तां क्षोभिणी श्रिता (७) ।
श्रुतिजातिपरिज्ञानसाधनं कथ्यतेऽधुना ॥ ६० ॥
स्वरस्थाने क्रियाभेदैर्वैचित्र्यं जायते बहु ।
जातिभेदसमव्याप्यं यत्तज्ज्ञेयं मनीषिभिः ॥ ६१ ॥
इक्षुक्षीरगतं यद्वन्माधुर्यं नोच्यते बुधैः[3] ।
तद्वच्छ्रुतिगता[4] जातीर्वाचा को वा वदिष्यति ॥ ६२ ॥
श्रोत्रप्रत्यक्षसिद्धास्ता भिन्नमूर्तिसमाश्रिताः ।
तद्वच्छ्रुतिगता जातिरन्वर्थनामका भवेत् ॥ ६३ ॥
एवं सप्तस्वरस्थानां श्रुतीनां जातिनिर्णयः ।
श्रुत्यनन्तरमुत्पन्नाः स्निग्धानुरणनात्मकाः ॥ ६४ ॥
रञ्जयन्ति स्वतः स्वान्तं श्रोतॄणामिति ते स्वराः ।
षड्जर्षभौ च गान्धारस्तथा मध्यमपञ्चमौ ॥ ६५ ॥
धैवतश्च निषादोऽयमिति नामभिरीरिताः ।
शुद्धत्वविकृतत्वाभ्यां स्वरा द्वेधा प्रकीर्तिताः ॥ ६६ ॥
शुद्धाः सप्त विकाराख्या द्व्यधिका विंशतिर्मताः ।
एकोनत्रिंशदुच्यन्ते ते सर्वे मिलिताः स्वराः ॥ ६७ ॥
स-री ग-मौ प-धौ निश्च स्वरा इत्यपि संज्ञिताः ।
चतुःश्रुतिसमायुक्ताः स्वराः स्युः स-म-पाभिदाः ६८
ग-नी श्रुतिद्वयोपेतौ रि-धौ त्रिश्रुतिकौ मतौ ।
स्वरः स्वोत्तरगामी चेत्तीव्रादिवचनोदितः ॥ ६९ ॥

१ ०तिज तिवि० । २ ०प्ता क्षोभिणीं मध्यमा श्रि० । ३ जनैः । ४ ०गतां जातिं वाचा ।

स्वरोऽग्रिमश्रुतिं याति तीव्रसंज्ञां प्रयात्यसौ ।
स्वरोऽग्रिमश्रुती याति तदा तीव्रतरो भवेत् ॥ ७० ॥
स्वरोऽग्रिमश्रुतीर्याति तर्हि तीव्रतमः स्मृतः ।
चतस्रः श्रुतयो यस्मिन्नधिकाः स्युर्यदा स्वरेः[1] ॥ ७१ ॥
अति तीव्रतमाख्यं च प्राप्नोतीति बुधा जगुः ।
स्वरः पश्चान्निवृत्तश्चेत्कोमलादिभिरीरितः ॥ ७२ ॥
एकश्रुतिपरित्यागात्स्वरः कोमलसंज्ञकः ।
श्रुतिद्वयपरित्यागात्पूर्वशब्देन मन्यते[2] ॥ ७३ ॥
स्वरः पश्चान्निवृत्तः सन्कोमलादित्वमेति चेत्[3] ।
तदुत्तरस्वरे गच्छंस्तीव्रतादिकमेति चेत् ॥ ७४ ॥
यस्माच्छुद्धस्वरादेवं प्राप्तसंज्ञाः[4] श्रुतीर्जगुः ।
साधारण्यं भवेत्तेषामन्यश्रुतिगतत्वतः ॥ ७५ ॥
साधारणो रिस्तीव्रः स्यादिति सूरिविनिश्चयः ।
साधारणान्तरौ गौ स्तस्तीव्रतीव्रतराविति ॥ ७६ ॥
तथा तीव्रतमो गोऽपि मृदुर्म इति कीर्तितः ।
साधारणान्तरौ मौस्तस्तीव्रतीव्रतराविति ॥ ७७ ॥
मश्च तीव्रतमोऽप्युक्तो मृदुः प इति पण्डितैः ।
साधारणो धस्तीव्रः स्यादिति प्रोक्तं मुनीश्वरैः ॥ ७८ ॥
साधारणः काकलीति तथा कैशिक इत्यपि ।
तीव्रतीव्रतरस्तीव्रतमोऽप्युक्तो मनीषिभिः ॥ ७९ ॥
सकल्पत्वान्मृदुर्निः स इति तीव्रतमो भवेत् ।
एवं शुद्धस्वराणां च विकृतानां च लक्षणम् ॥ ८० ॥
संगीतशास्त्रवेत्तारः प्रवदन्ति मुनीश्वराः ।
प्रयोगो बहुधा यस्य वादिनं तं स्वरं जगुः ॥ ८१ ॥

---

१ ०रः । तदा ती० । २ भण्यते ३ ०त् स्वरः स्वोत्तरतो ग० । ४ प्राप्तसंख्याः ।

राजत्वमपि तस्येति मुनयः संगिरन्ति हि ।
श्रुतयोऽष्टौ द्वादश वा ययोरन्तरगोचराः ॥ ८२ ॥
मिथः संवादितौ तौ स्तः स-पौ स्यातां प-सौ तथा ।
न वादी न च संवादी न विवाद्यपि यः स्वरः ॥ ८३ ॥
सोऽनुवादीति विज्ञेयः सूक्ष्मदृष्ट्या विचक्षणैः ।
रक्तिविच्छेदहेतुत्वं यस्मिन्रागे तु यस्य च ॥ ८४ ॥
तद्रागस्य स्वरैस्तस्य विवादित्वं भवेध्द्रुवम् ।
तस्यामात्यस्तु संवादी वादिनो राजसंज्ञिनः ॥ ८५ ॥
भृत्यतुल्योऽनुवादी स्याद्विवादी शत्रुवद्भवेत् ।
देवताकुलसंभूताः षड्ज-गान्धार-मध्यमाः ॥ ८६ ॥
पञ्चमः पितृवंशीयो रि-धौ मुनिकुलोद्भवौ ।
निर्दैत्यकुलसंजात इत्येषां कुलनिर्णयः ॥ ८७ ॥
स-म-पा ब्राह्मणा ज्ञेयाः क्षत्रियौ च रि-धौ मतौ ।
वैश्यजाती ग-नी ज्ञेयौ शूद्राः स्युर्विकृताः स्वराः॥८८॥
इति स्वरगता जातीः प्रवदन्ति मनीषिणः ॥ ८९ ॥
कमलाभः स्वरः षड्ज ऋषभः पिञ्जरः स्वरः ।
हाटकाभस्तु गान्धारः कुन्दाभो मध्यमः स्वरः॥९०॥
पञ्चमस्तु स्वरः श्यामो धैवतः पीतवर्णयुक् ।
निषादः कर्बुरश्चेति स्वराणां वर्णनिर्णयः ॥ ९१ ॥
जम्बुशाककुशक्रौञ्चशाल्मलीश्वेतनामसु ।
द्वीपेषु पुष्करे द्वीपे जाताः सप्तस्वराः क्रमात् ॥ ९२ ।
अग्निर्ब्रह्मा मृगाङ्कश्च लक्ष्मीशो नारदो मुनिः ।
तुम्बुरुर्धनदश्चेति ते सप्तस्वरदर्शिनः ॥ ९३ ॥
वह्निब्रह्मसरस्वत्यः शर्वश्रीशगणेश्वराः ।
सहस्रांशुरिति प्रोक्ताः क्रमात्षड्जादिदेवताः ॥ ९४ ॥
अथाऽनुष्टुप्च गायत्री त्रिष्टुप्च बृहती तथा ।

पङ्क्तिरुष्णिग्जगत्यौ च च्छन्दांस्याहुः स्वरेष्विति ९५
स-मौ हास्ये च श्रृंगारे स्वरौ स्यातां तथा ध-नी ।
पो बीभत्से तथा दैन्ये भयानकरसे भवेत् ।
रसे श्रृङ्गारके रिः स्याद्गान्धारो हास्यके पुनः ॥९६॥
तीव्रो वीरेऽद्भुते रौद्रे हास्ये तीव्रतरः स्वरः ।
तीव्रतरोऽपि श्रृङ्गारे रसे मध्यम ईरितः ॥ ९७ ॥
तीव्रतमश्च श्रृङ्गारे मृदुमो हास्यके रसे ।
एवं रसविभागः स्यात्स्वरेषु सप्तसु ध्रुवम् ॥ ९८ ॥

इति स्वरप्रकरणम् ।

अथ ग्रामास्त्रयः प्रोक्ताः स्वरसंदोहरूपिणः ।
षड्जमध्यमगान्धारसंज्ञाभिस्ते समन्विताः ॥ ९९ ॥
मूर्छनाधारभूतास्ते षड्जग्रामस्त्रिषूत्तमः ।
रागा ग्रामद्वयालभ्याः षड्जग्रामोद्भवा इति ॥१००॥
यथोक्तश्रुतिकाः प्रोक्ताः षड्जग्रामेऽखिलाः स्वराः ।
मध्यमे मेरुसंस्थेऽस्मिन्मध्यमग्रामसंभवः ॥ १०१ ॥
यदा तदैव तास्तिस्रः ( सृः ) श्रुतीर्याति स पञ्चमः ।
निषादं त्रिश्रुतिं तत्र ब्रूयुर्लक्षणकोविदाः ॥ १०२ ॥
अन्ये तु श्रुतिभिर्युक्ताः स ग्रामस्थस्वरा इव ।
श्रुतित्रयसमायुक्तो यदा गो मेरुगो भवेत् ॥ १०३ ॥
गान्धारग्राम आख्यातस्तिसृभिः श्रुतिभिः परे ।
चतुःश्रुतिर्निषादः स्यात्षड्जोऽपि तिसृभिर्युतः ॥१०४॥

इति ग्रामलक्षणम् ।

आरोहश्चावरोहश्च स्वराणां जायते यदा ।
तां मूर्छनां तदा लोक आहुर्ग्रामाश्रयां बुधाः ॥१०५॥
सप्तसंख्यायुतास्ताः स्युस्तासां नामानि वच्म्यहम् ।

---

१ रयुक्तास्ते ।

तत्र तूत्तरमन्द्रा स्यात्षड्जपूर्वकसंभवा ॥ १०६ ॥
द्वितीया रजनी प्रोक्ता निषादस्वरपूर्विका ।
धैवतादिस्वरोद्भूता तृतीया चोत्तरायता ॥ १०७ ॥
चतुर्थी शुद्धषड्जा स्यात्पञ्चमादिस्वरोद्भवा ।
मत्सर्याद्याकृताख्या सा मध्यमादिस्वरोद्भवा ॥ १०८ ॥
अश्वक्रान्ता तु षष्ठी स्याद्गान्धारस्वरपूर्विका ।
ऋषभादिस्वरोद्भूता सप्तम्याख्याभिरुद्गता ॥ १०९ ॥
आरोहश्चावरोहश्च तथैव विकृतेष्वपि ।
खाडवौडवरीत्याऽत्र कुर्यादारोहणादिकम् ॥ ११० ॥
मध्यषड्जं समारभ्य तदूर्ध्वस्वरमाव्रजेत् ।
पूर्वैकैकस्वरं त्यक्त्वा त्वारोहादिकमूह्यताम् ॥ १११ ॥
शुद्धासु यानि नामानि तान्येव विकृतेष्वपि ॥ ११२ ॥
पूर्वकोमलतीव्राणामृषभाणां क्रमेण तु ।
योगे शुद्धस्वरैर्भेदा एकविंशतिरीरिताः ॥ ११३ ॥
रिं तीव्रतरमादाय मूर्छना क्वापि नोदिता ।
शुद्धगान्धाररहित्याच्छुद्धषट्कवियोगतः ॥ ११४ ॥
कोमलादिकगान्धारैश्चतुर्भिर्विकृतैः स्वरैः ।
अष्टाविंशतिभेदाः स्युः शेषैः शुद्धस्वरैरिह ॥ ११५ ॥
गस्य पूर्वस्य संयोगे त्वतितीव्रतमस्य च ।
गस्य योगे रि-मौ शुद्धौ न स्तो भेदान्कथं जगुः॥११६
तीव्रादि म-त्रयेणापि भेदास्तत्रैकविंशतिः ।
पूर्वकोमलतीव्राणां धैवतानां क्रमेण तु ॥ ११७ ॥
योगे शुद्धस्वरैर्भेदा एकविंशतिरीरिताः ।
धं तीव्रतरमादाय मूर्छना क्वापि नोदिता ॥ ११८ ॥
शुद्धनिषादराहित्याच्छुद्धषट्कवियोगतः ।
अष्टाविंशतिभेदाः स्युः कोमलादिकनिस्वरैः ॥ ११९ ॥

निषादं पूर्वमादाय मूर्छना कापि नोदिता ।
शुद्धधैवतराहित्याच्छुद्धषट्कवियोगतः ॥ १२० ॥
शुद्धैर्विकृतभेदाभ्यां ग-रिभ्यां योजितैः स्वरैः ।
द्वादशभिः शतं भेदा भवन्तीति बुधा जगुः ॥ १२१ ॥
यदा स्यातां रि-धौ तीव्रौ पूर्वकोमलसंज्ञितौ ।
गन्योस्तत्पूर्ववृत्तित्वात्तौ तदादाय नो भिदा ॥ १२२ ॥
रिभिस्त्रिभिस्तथा मैश्च विकृतैर्मिलितैः स्वरैः ।
शुद्धैर्भेदास्त्रिषष्टिः स्युः पञ्चभिश्चापि सोऽब्रवीत्॥१२३॥
त्रिभी रिभिर्विकाराद्यैस्ताद्दशैर्धस्वरैरपि ।
शेषशुद्धस्वरैर्भेदा जायन्तेऽत्र त्रिषष्टिधा ॥ १२४ ॥
पूर्वकोमलतीव्रैश्च कोमलादिकसंज्ञितैः ।
रिभिस्त्रिभिः स्वरैः शुद्धैरशीतिश्चतुरुत्तराः ॥ १२५ ॥
कोमलादित्वभावैर्गैर्मध्यमैर्विकृतैस्त्रिभिः ।
पञ्चोत्तरशतं भेदान्स्वरैः शुद्धैर्बुधा जगुः ॥ १२६ ॥
कोमलादिकगान्धारैश्चतुर्भिर्विकृतैस्त्रिभिः ।
विकृतैर्धैवतैर्भेदा अशीतिश्चतुरुत्तराः ॥ १२७ ॥
चतुर्भिर्विकृतर्गैश्च निषादैस्तादृशैरपि ।
भेदाः शुद्धैः समायोगे स्युः शतं द्वादशोत्तरम् ॥१२८॥
त्रिभिर्मैर्विकृतैर्धैश्च पूर्वादिककृतैस्त्रिभिः ।
पञ्चशुद्धस्वरैर्भेदांस्त्रिषष्टिमिति मेनिरे ॥ १२९ ॥
त्रिधा मैश्च निषादैश्च चतुर्भिर्विकृतैः स्वरैः ।
पञ्चशुद्धस्वरैर्भेदा अशीतिश्चतुरुत्तराः ॥ १३० ॥
धैवतैर्विकृतैः सर्वैः सर्वैश्च विकृतैर्निभिः ।
शेषैः शुद्धैः कृता भेदाः स्युः शतं द्वादशोत्तरम् १३१
रिभिः सर्वैस्तथा गैश्च विकृतैर्मध्यमैः स्वरैः ।
शेषशुद्धैश्च भेदाः स्युः सषट्त्रिंशच्छतत्रयम् ॥ १३२ ॥

रिभिः सर्वैस्तथा गैश्च पञ्चभिर्धैवतैस्त्रिभिः ।
शेषैः शुद्धैश्च भेदाः स्युः सविंशतिचतुःशतम् ॥ १३३ ॥
ऋषभैर्विकृतैः सर्वैर्गान्धारैर्वेदसंमितैः ।
निस्वरैर्वेदसंख्याकैः शेषैः शुद्धैः स्वरैरपि ।
भेदा भवन्ति साष्टौ च चत्वारिंशच्चतुःशती ॥ १३४ ॥
त्रिभी रिभिस्त्रिभिर्मैश्च त्रिभिर्धैर्विकृतैः स्वरैः ।
वेदशुद्धैश्च भेदाः स्युर्नवाशीत्ययुतं शतम् ॥ १३५ ॥
रिभिस्त्रिभिस्तथा मैश्च निभिरप्यब्धिसंमितैः ।
अन्यैः शुद्धैश्च भेदाः स्युर्द्वयं पञ्च पुनर्द्वयम् ॥ १३६ ॥
त्रिभी रिभिर्वेदधैश्च निषादैर्बाणसंमितैः ।
वेदशुद्धैश्च भेदाः स्युर्विंशत्या च चतुःशती ॥ १३७ ॥
बाणगैर्विकृतैः सर्वैर्मैश्च धैरग्निसंमितैः ।
अब्धिशुद्धैश्च भेदाः स्युस्त्रिशती दश पञ्च च ॥१३८॥

विकृतैः पञ्चभिर्गैर्मैस्त्रिभिरब्धिनिभिस्तथा ।
अन्यैः शुद्धैश्च भेदाः स्युः सविंशतिचतुःशती ॥१३९॥
अब्धिगैरब्धिधैरब्धि-निभिः शुद्धैः स्वरैरपि ।
भेदा भवन्ति साष्टौ तु चत्वारिंशच्चतुःशती ॥ १४० ॥
त्रिभिर्मैर्वेदधैश्चापि निषादैरब्धिसंमितैः ।
अब्धिशुद्धैश्च भेदाः स्युः सषट्त्रिंशच्छतत्रयम्॥१४१॥
रीणां गानां तथा मानां वह्निधानां च मेलने ।
सहस्रं द्विशती षष्टिर्भेदा उक्ता मनीषिभिः ॥ १४२ ॥
शून्यं वसू रसश्चन्द्र इति भेदाः प्रकीर्तिताः ॥ १४३॥
रीणां गानामाब्धिधानां तथा नीनां च मेलने ।
नेत्रं रन्ध्रं मुनिश्चन्द्रो भेदाश्चात्रेति मेनिरे ॥ १४४ ॥
रिभिस्त्रिभिस्तथा मैश्च वेदधैर्निस्वरैरपि ।
अष्टोत्तरसहस्रं च भेदा उक्ता मनीषिभिः ॥ १४५ ॥

गानां मानां तथा धानां निषादानां च मेलने ।
शून्यं वसू रसश्चन्द्र इति भेदाः प्रकीर्तिताः ॥ १४६ ॥
रीणां गानां तथा मानां धानां नीनां च मेलने ।
षट्सहस्रं च विंशत्या शतं सप्त च संयुताः ॥ १४७ ॥
इति भेदान्मुनीन्द्रास्तु प्राहुः शास्त्रेण बोधितान् ।
मूर्छनानां प्रभेदानां संपूर्णानि च सर्वशः ॥ १४८ ॥
वसुरब्धी रसाष्टौ च चन्द्रश्चेति मितिर्भवेत् ।
भवन्ति मूर्छना एता ग्रामेऽस्मिन्षड्जसंज्ञके ॥ १४९ ॥
ग्रामयोर्ग-मयोरेवं संपूर्णा मूर्छना मताः ।
मध्यमे मध्यमस्यापि गान्धारे ग-स्वरस्य च ॥ १५० ॥
विकृतत्वं न वक्तव्यं तयोर्यस्मात्प्रधानता ।
ग-म-ग्रामे ग-मौ त्यक्त्वा मूर्छना नाभिसंमता ॥१५१॥
आद्याद्यमूर्छनातानं संपूर्णे कथिते बुधैः ।
तानाः पञ्चसहस्राणि चत्वारिंशद्युतानि च ॥ १५२ ॥
तावत्संख्याविशिष्टानां तानानां गणना कृता ।
स्वरसेषुरसा नेत्रमब्धिर्वह्निः शशीति च ॥ १५३ ॥
नि-ध-प-म ग-रीणांतु लोपादथ च षाडवाः ।
क्रमादेककसंत्यागात्षड्विंशन्मूर्छना मताः ॥ १५४ ॥
एवं षाडवशुद्धाः स्युर्विकृता अपि चक्ष्महे ।
त्रयोदश रिभेदाः स्युर्भेदास्तत्सप्तमा मताः ॥ १५५ ॥
इति भेदा निहीनानामष्टसप्ततिरीरिताः ।
एवं भेदा ध-हीनानामशीतिश्चतुरुत्तराः ॥ १५६ ॥
तथा भेदाः प-हीनानां स्युः शतं लोचनोत्तरम् ।
म-हीनानां तु भेदाः स्युरशीतिश्चतुरुत्तराः ॥ १५७ ॥
तथा गान्धारहीनानामष्टसप्ततिरीरिताः ।
रि-हीनानामपि ज्ञेया अशीतिश्चतुरुत्तराः ॥ १५८ ॥

चतुर्भिश्च रिभिस्तत्र गान्धारैः पञ्चभिः स्वरैः ।
षण्णवतिर्नि-हीनाः स्युर्भेदा उक्ता मनीषिभिः ॥१५९॥
रिभिस्त्रिभिस्तथा मैश्च भेदाः स्युरब्धिराशुगाः ।
एवं रिभिस्तथा धैश्च भेदास्तावन्त एव हि ॥ १६० ॥
पञ्चभिर्गैस्त्रिभिर्मैश्च भेदा नवतिरीरिताः ।
गान्धारधैवतानां तु द्विसप्ततिभिदा मताः ॥ १६१ ॥
मध्यमानां तथा धानां भेदाः स्युरब्धिराशुगाः ।
इति भेदा नि-हीनानां सविंशतिचतुःशती ॥ १६२ ॥
एवं भेदा ध-हीनानामशीत्या स्युश्चतुःशती ।
भेदा ज्ञेयाः प-हीनानां रसो बाणो मुनिः क्रमात् १६३
म-हीनानामपि ज्ञेयाः षडशीत्या चतुःशती ।
तथा गान्धारहीनानां लोचनेन चतुःशती ॥ १६४ ॥
ऋषभेणापि हीनानामशीत्या स्युश्चतुःशती ।
रिभि-गै-मैः स्वभेदैश्च ज्ञेया भेदा विचक्षणैः ॥ १६५ ॥
मूर्छनासु नि-हीनासु षष्ट्या युक्तं शतत्रयम् ।
रि-ग-धैश्च भिदा ज्ञेया साष्टाशीतिशतद्वयम् ॥१६६॥
रि-म-धैश्चापि भेदाः स्युर्द्विषष्ट्या च युतं शतम् ।
म-म-धैश्च भिदा ज्ञेया सप्तत्या च शतद्वयम् ॥१६७॥
इति भेदा नि-हीनानामशीत्या च सहस्रकम् ।
तथा भेदा ध हीनानां खलोचनाग्नयः शशी ॥१६८॥
एवं भेदाः प-हीनानां सहस्रत्रयसंख्यकाः ।
म-हीनानामपि ज्ञेया वेदौ वह्निः शशी क्रमात्॥१६९॥
तथा भेदा ग-हीनानामब्धिः शरोऽथ रन्ध्रकम् ।
इति भेदा रि-हीनानां नेत्राकाशाग्नयः शशी ॥१७०॥
रि-ग-मानां तथा धानां नि-हीनासु विभेदतः ।
इति योगे भिदा ज्ञेया शून्यं वसुर्नभः शशी ॥१७१॥

रि-ग- मानां तथा नीनां ध-हीनासु विभेदतः ।
इति योगे भिदा ज्ञेया शून्यं वेदौ च चन्द्रमाः ॥१७२॥
रि-गाणां च म-धानां च मूर्छनासु विभेदतः ।
योगे भेदाः प-हीनासु स्युरशीत्या सहस्रकम् ॥१७३॥
रि- गाणां च म नीनां च प-हीनासु विभेदतः
मूर्छनासु भिदा योगे खं च वेदौ शशी पुनः ॥१७४॥
रि-ग-धानां तथा नीनां प-हीनासु विभेदतः ।
योगे तत्र भिदा ज्ञेया रसो वह्निः शरः शशी॥१७५॥
रि-म-धानां तथा नीनां प-हीनासु विभेदतः
योगे भेदास्तथा ज्ञेयाः सागरश्च रसो वसुः ॥ १७६ ॥
ग-म-धानां तथा नीनां प-हीनासु विभेदतः ।
योगे तत्र भिदा ज्ञेयाः शून्यं वेदौ शशी पुनः॥१७७॥
इति भेदाः प-हीनानां स्यू रसौ पावको रसः ॥१७८॥
रि-गा-नां च ध-नीनां च म-हीनासु विभेदतः ।
इति योगे भिदा ज्ञेया रसो वह्निः शरः शशी॥१७९॥
रि-म-धानां तथा नीनां ग-हीनासु विभेदतः ।
इति योगे भिदा ज्ञेयाः सागरश्च रसो वसुः ॥ १८० ॥
ग-म धानां तथा नीनां रि-हीनासु विभेदतः ।
इति योगे भिदा ज्ञेयाः खं च वेदौ शशी पुनः॥१८१॥
रि-ग-म-ध-निषादानां योगे भेदा उदीरिताः ।
खरसमुनिबाणैश्च प-हीनासु मुनीश्वरैः ॥ १८२ ॥
मूर्छनानां प्रभेदानां षाडवानां च सर्वशः ।
खबाणशून्यचन्द्रैश्च पावकेन मितिर्भवेत् ॥ १८३ ॥
यत्स्वरेण विहीनायां मूर्छनायां पृथक्पृथक् ।
तत्स्वरेणैव हीनाः स्युः प्रस्ताराः षाडवाः क्रमात् १८४
सप्तशत्या सविंशत्या गुणितानां मितिर्भवेत् ।

शून्यत्रयं रसो नेत्रं सप्त वह्निरिति क्रमात् ॥ १८५ ॥
औडवा अथ कथ्यन्ते शुद्धेषु विकृतिष्वपि ॥ १८६ ॥
द्वयोर्द्वयोः परित्यागात्क्रमाद्भेदा मनीषिणः ।
औडवानां विशुद्धानामवदन्पञ्चसप्ततिम् ॥ १८७ ॥
रि-भेदास्तत्र संगृह्य द्वाभ्यां द्वाभ्यां विवर्जनात् ।
भेदानपि विजानीयात्पञ्चाशदुत्तरं शतम् ॥ १८८ ॥
ग-भेदा द्विशती ज्ञेया म-भेदा रि-समा मताः ।
ध-भेदास्तत्समा ज्ञेया नि-भेदा ग-समा मताः ॥१८९॥
रीणां गानां प्रभेदाः स्युरशीत्या च चतुःशती ।
रीणां मानां च भेदाः स्युः सप्तत्या च शतद्वयम् १९०
रीणां धानां तथा भेदास्तावन्तोऽत्रापि संमताः ।
रीणां नीनां प्रभेदाः स्युः षष्ट्या युक्तं शतत्रयम् १९१
ग-मानां च भिदा ज्ञेयाः सपञ्चाशच्चतुःशती ।
तथा भेदा ग-धानां च षष्ट्या युक्तं शतत्रयम् १९२
ग-नीनां च भिदा ज्ञेया अशीत्या च चतुःशती ।
म-धानां च प्रभेदाः स्युः सप्तत्या च शतद्वयम्॥१९३॥
म-नीनां च भिदा ज्ञेयाः षष्ट्या युक्तं शतत्रयम् ।
ध-नी-नां च प्रभेदाः स्युरशीत्या च चतुःशती॥१९४॥
रि-ग-मानां भिदास्तत्र शून्यद्वन्द्वं च रन्ध्रकम् ।
रि-ग-धानां प्रभेदाः स्युः शून्यं नेत्रं मुनिस्तथा॥१९५॥
रि-ग-नीनां भिदा ज्ञेया खरसावथ रन्ध्रकम् ।
रि-म-धानां तथा भेदाः पञ्चोत्तरचतुःशती ॥ १९६ ॥
रि-म-नीनां प्रभेदाः स्युः खं च वेदः शरस्तथा ।
रि-ध-नीनां भिदा ज्ञेया शून्यं नेत्रं तथा मुनिः॥१९७॥
ग-म-धानां तथा भेदाः शरो मुनिस्तथा रसः ।
ग-म-नीनां प्रभेदाः स्युः शून्यद्वन्द्वं च रन्ध्रकम् १९८

ग-ध-नीनां भिदा ज्ञेया खरसाङ्कैर्विचक्षणैः ।
म-ध-नीनां तथा भेदाः शून्यं नेत्रं तथा मुनिः ॥१९९॥
रि-गानां च म-धानां च भेदा नवशतानि च ।
रि-ग-मानां भिदा नीनां खद्वयं लोचनं शशी ॥२००॥
रि-ग-धानां च नीनां स्युः खं वसुर्लोचनं शशी ।
रि-म- धानां भिदा नीनां शून्यं नेत्रं तथा मुनिः २०१
ग-मानां च ध-नीनां स्युः खद्वयं लोचनं शशी॥२०२॥
औडवानां च सर्वेषां मूर्छनानां मितिर्भवेत् ।
सप्तदश सहस्राणि पञ्च पञ्चशतानि च ॥ २०३ ॥
द्वाभ्यां द्वाभ्यां विहीनायां मूर्छनायां पृथक्पृथक् ।
ताभ्यामेव विहीनाः स्युः प्रस्तारा औडवाः क्रमात्२०४
सविंशत्या शतेनात्र गुणितानां मितिर्भवेत् ।
शून्यं नेत्रं शशी शून्यं नेत्रोदधीति संख्यया ॥२०५॥

इति मूर्छनाप्रकरणम् ।

प्रथमस्य द्वितीयस्यावृत्तिरेका स्वरस्य च ।
तृतीयस्य द्विरावृत्तिः स्वरस्यात्र सुनिश्चितः ॥ २०६ ॥
चतुर्थस्य षडावृत्तिः पञ्चमस्तच्चतुर्गुणः ।
तस्मात्पञ्चगुणः षष्ठः सप्तमः षड्गुणस्ततः ॥ २०७ ॥
चलितानां स्वराणां तु यथोचितक्रमो भवेत् ।
इति पञ्चसहस्राणि चत्वारिंशद्युतानि च ॥ २०८ ॥
पूर्णानां षाडवानां तु सप्तशतानि विंशतिः ।
औडवानां तु विंशत्या शतं भेदान्बुधा जगुः ॥२०९॥
चतुर्विंशतिभेदाः स्युश्चतुर्णां तत्र निश्चिताः ।
षड्भेदाः स्युस्त्रयाणां तु द्वयोर्द्वावेव निश्चितौ ॥२१०॥
एकस्यैको भवेद्भेदः प्रस्तारा ईदृशा मताः ।
नष्टोद्दिष्टप्रबोधार्थं खण्डमेरुरथोच्यते ॥ २११ ॥

सप्ताद्यकान्त्यकोष्ठः स्याद्धमि हीनास्ततो भवेत् ।
आद्यपंक्तयाद्यकोष्ठेषु लिखेदेकं परेषु खम् ॥ २१२ ॥
आद्यकोष्ठे द्वितीयस्य पङ्क्तावेकं लिखेदपि ।
पङ्क्तिषूर्ध्वासु तिर्यक्षु कोष्ठस्याङ्कगुणं न्यसेत् ॥२१३॥
शून्येषु लोष्टकान्दत्त्वा मूलक्रमं ततो लिखेत् ।
उद्दिष्टं तदधः कृत्वा ततो लोष्टस्य चालनम् ॥२१४॥
उद्दिष्टान्तस्वरो मूलक्रमस्यान्त्यात्कियत्तमः ।
तावत्संख्याविशिष्टे च कोष्ठे लोष्टकमाक्षिपेत् ॥२१५॥
लोष्टचालनमन्त्यात्स्याल्लब्धं त्यक्त्वा क्रमो भवेत् ।
अन्त्ययोरुभयोरिको लोष्टस्य चलनं न हि ॥ २१६ ॥
मूलैकाङ्कं गृहीत्वैव लोष्टाक्रान्ताङ्कमेलने ।
उद्दिष्टस्य मितिर्ज्ञेया तस्यामुद्दिष्टता स्मृता ॥ २१७ ॥
रूपाभावेन नष्टं स्यात्संख्या मात्रपुरःसरम् ।
यैरङ्कैर्नष्टसंख्या स्यात्मूलैकाङ्कसमन्वितः ॥ २१८ ॥
तेष्वेवात्र क्षिपेल्लोष्टं लोष्टस्थानामितिस्वरः ।
अवरोहक्रमेणैव मूलं त्यक्त्वा क्रमो भवेत् ॥ २१९ ॥
अथवा लोष्टसंख्यान्त्यो लोष्टस्थानं स्वरस्य च ॥२२०॥

इति मूर्च्छना-प्रस्तार-नष्टोद्दिष्ट-प्रकरणम् ।

गानक्रियोच्यते वर्णः स चतुर्धा निरूपितः ।
स्थाय्यारोह्यवरोही च संचारीत्यथ लक्षणम् ॥ २२१ ॥
स्थित्वा स्थित्वा प्रयोगः स्यादेकैकस्मिन्स्वरे पुनः ।
स्थायी वर्णः स विज्ञेयः परावन्वर्थनामकौ ।
एतत्संमिश्रणाद्वर्णः संचारी परिकीर्तितः ॥ २२२ ॥

इति वर्णलक्षणम् ।

क्रमेण स्वरसंदर्भमलंकारं प्रचक्षते ।
तस्य भेदास्तु भूयांसस्तत्र स्थायिगतान्ब्रुवे ॥ २२३ ॥

येषामाद्यन्तयोरेकस्वरास्ते स्थायिवर्णगाः ।
प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्तसंज्ञकः ॥ २२४ ॥
ततः प्रसन्नमध्यः स्यात्पञ्चमः क्रमरेचितः ।
प्रस्तारोऽथ प्रसादः स्यात्सप्तैते स्थायिवर्णगाः ॥२२५॥
प्रसन्नो मन्द्रपर्यायः प्रसन्नादिस्तदाद्यकः ।
प्रसन्नान्तस्तदन्तः स्यान्मन्द्राद्यन्तस्तृतीयकः ।
चतुर्थो मन्द्रमध्यः स्यात्क्रमाच्च क्रमरेचितः ॥ २२६ ॥
प्रस्तारोऽन्वर्थनामा स्यात्प्रसादस्तु प्रसन्नता ।
ऊर्ध्वरेखाशिरास्तारो मन्द्रो बिन्दुशिरा भवेत् ॥२२७॥
भद्रो नन्दो जितः सोमो ग्रीवो भालः प्रकाशकः ।
इत्यन्यान्यपि नामानि मुनयः संगिरन्ति हि ॥२२८॥
यमारभ्याग्रिमं गत्वा पुनः पूर्वस्वरं वदेत् ।
भद्रसंज्ञमलंरमाञ्जनेयोऽवदत्सुधीः ॥ २२९ ॥
एकैकस्य स्वरस्यात्र हानादेव क्रमो भवेत् ।

स रि स । रि ग रि । ग म ग । म प म ।
प ध प । ध नि ध । नि स नि । सनिस ॥

इति भद्रः । प्रसन्नादिः । १ ।

नन्दः स्याद्रूपकेणात्र स्वरद्वन्द्वेन पूर्ववत् ॥ २३० ॥

सस रिरि सस ! रिरि गग रिरि ।
गग मम गग । मम पप मम ।
पप धध पप । धध निनि धध ।
निनि सस निनि । सस निनि सस ॥

इति नन्दः । प्रसन्नान्तः । २ ।

जितः स्याल्लघुकालेन स-ग-रिसेत्ययं क्रमः ।

स ग रि स । रि म ग रि । ग प म ग ।

म ध प म । प नि ध प । ध स नि ध ॥

इति जितः । प्रसन्नाद्यन्तः । ३ ।

गुरुकालेन सोमः स्यात्स्वरद्वन्द्वेन पूर्ववत् ॥ २३१ ॥

सस गग रिरि सस । रिरि मम गग रिरि ।

गग पप मम गग । मम धध पप मम ।

पप निनि धध पप । धध सस निनि धध ॥

इति सोमः । प्रसन्नमध्यः । ४ ।

स-गौ रि-गौ समुच्चार्य म-गौ रि-सौ तथैव च ।

ग्रीवं लघुद्वयेनात्र हनूमानवदत्सुधीः ॥ २३२ ॥

स ग रि ग म ग रि स । रि म ग म प म ग रि ।

ग प म प ध प म ग । म ध प ध नि ध प म ।

प नि ध नि स नि ध प ॥

इति ग्रीवः । क्रमरेचितः । ५ ।

स-गौ रि-गौ समुच्चार्य म-गौ रि-सौ तथैव च ।

द्रुताभ्यां लघुकालेन भालं वदति मारुतिः ॥ २३३ ॥

स ग रि म म ग रि स । रि म ग प प म ग रि ।

ग प म ध ध प म ग । म ध प नि नि ध प म ।

प नि ध स स नि ध प ॥

इति भालः । प्रस्तारः । ६ ।

सौरी-गो मो ग-री गश्च रि-साविति स्वरैश्च तैः ।

हनूमानड्डतालेन प्रकाशाख्यं तमब्रवीत् ॥ २३४ ॥

सस रिरि गग मगरि गरिस ।

रिरि गग मम पमग मगरि ।

मम पप धध निधप धपम ।

पप धध निनि सनिध निधप ।

इति प्रकाशः । प्रसादः । ७ ।

यत्र च नोच्यते कालः स्वरैस्तत्र तु बोध्यते ।
स्यातां विस्तीर्ण-निष्कर्षौ बिन्दुरभ्युच्छ्रयः परः॥२३५॥
हसितं प्रेङ्खिताक्षिप्तौ संधिप्रच्छादनस्तथा ।
उद्गीतोद्वाहितौ तद्वत्त्रिवर्णवेणिरित्यपि ॥ २३६ ॥
मूर्छनादेः स्वराद्यत्र क्रमेणाऽऽरोहणं भवेत् ।
स्थित्वा स्थित्वा स्वरैर्दीर्घैः स विस्तीर्णोऽभिधीयते२३७
सा री गा मा पा धा नी सा ॥
इति विस्तीर्णः । १ ।
ह्रस्वैः स्वरैः स निष्कर्षो द्विद्विरुक्तैर्निरन्तरैः ।
सस रिरि गग मम पप धध निनि सस ॥
इति निष्कर्षः । २ ।
त्रिश्चतुर्वा स्वरोच्चारो गात्रवर्णमिमं विदुः ।
निष्कर्षस्यैव द्वौ भेदौ केचिदेतौ बभाषिरे ॥ २३८ ॥
स स स । रि रि रि । ग ग ग । म म म ।
प प प । ध ध ध । नि नि नि । स स स ।
स स स स । रि रि रि रि । ग ग ग ग । म म म म ।
प प प प । ध ध ध ध । नि नि नि नि । स स स स ।
इति गात्रवर्णः । २ ।
आद्यं दीर्घत्रयं प्राह द्वितीयं ह्रस्वमेव च ।
बिन्दुबिन्दुत्रयेणापि हनूमान्सार्धबिन्दुना ॥ २३९ ॥
सासासारि । रीरीरीग । गागागाम । मामामाप ।
पापापाध । धाधाधानि । नीनीनीस ।
इति बिन्दुः । ३ ।
एकान्तरस्वरारोहमाहुरभ्युच्छ्रयं बुधाः ॥ २४० ॥
यत्रैकोत्तरवृद्धाभिरावृत्तिभिरुदीरिताः ।
आरुह्यन्ति स्वराः प्राह हसितं तं शिवप्रियः ॥२४१॥

स । सरि । सरिग । सरिगम । सरिगमप ।
सरिगमपध । सरिगमपधनि । सरिगमपधनिस ॥

अथवा–

स । रिरि । गगग । मममम । पपपपप ।
धधधधधध । निनिनिनिनिनिनि । ससससससस ।

इति हसितः । ५ ।

स्वरद्वयं समुच्चार्य पूर्वपूर्वयुतं परम् ।
यदाऽऽन्दोलितमारोहे प्रेङ्खितस्य क्रमं जगुः॥२४२॥
सारी । रीगा । गामा । मापा । पाधा । धानी । नीसा ॥

इति प्रेङ्खितः । ६ ।

एकान्तरस्वरद्वन्द्वं त्यक्तपूर्वयुतं परम् ।
क्रमादारोहणं यत्र तदाऽऽक्षिप्तं प्रचक्षते ॥ २४३ ॥
ससगम । रिरिमम । गगपप । ससधध । पपनिनि । धधसस॥

इत्याक्षिप्तः । ७ ।

ह्रस्वमाद्यद्वयं कृत्वा दीर्घं कृत्वा तृतीयकम् ।
हनूमानाह सर्वज्ञः संधिप्रच्छादनं परम् ॥ २४४ ॥
सरिगा । रिगमा । गमपा । मपधा । पधनी । धनिसा ॥

इति संधिप्रच्छादनः । ८ ।

आद्यं द्विवारमुच्चार्य स्वरं द्वितीयमेकदा ।
तथा दीर्घं तृतीयंच तदोद्गीतः प्रकीर्तितः ॥ २५५ ॥
स स रि गा । रि रि ग मा । ग ग म पा ।
म म प धा । प प ध नी । ध ध निसा ॥

इत्युद्गीतः । ९ ।

आद्यं स्वरं चतुर्वारं द्विवारंच द्वितीयकम् ।

सकृदुक्तं तृतीयं तु तथा सकृच्चतुर्थकम् ।
उद्घाहितस्त्वलंकारो हनूमता प्रकीर्तितः ॥ २४६ ॥
स स स स रि रि ग म । रि रि रि रि ग ग म प ।
ग ग ग ग म म प ध । म म म म प प ध नि ।
प प प प ध ध नि स ॥

इत्युद्घाहितः । १० ।

तृतीयस्य त्रिरावृत्तौ त्रिवर्णं वर्णयन्त्यमुम् ।
स रि गगग । रि ग ममम । ग म पपप ।
म प धधध । प ध निनिनि । ध नि स स स ॥

इति त्रिवर्णः । ११ ।

त्रयाणांतु त्रिरावृत्तौ पृथग्वेणिरुदीरितः ॥ २४७ ॥
स स स रिरिरि ग ग ग । रिरिरि ग ग ग म म म
ग ग ग म मम प प प । म म म प प प धधध ।
प प प धधध नि नि नि स स स ॥

इति पृथग्वेणिः । १२ ।

इत्यारोह्यलंकाराः ।

अवरोहक्रमादेते द्वादशाप्यवरोहिणः ।
गौरवादवरोहस्य लेखनं न कृतं मया ॥ २४८ ॥

इत्यवरोह्यलंकाराः ।

मन्द्रादिर्मन्द्रमध्यश्च मन्द्रान्तः स्यादतः परम् ।
प्रस्तारश्च प्रसादोऽथ व्यावृत्तश्चलितस्तथा ॥ २४९ ॥
परिवर्ताख्य-आक्षेपो बिन्दुसंज्ञस्ततः परम् ।
अथोद्घाहित ऊर्मिः स्यात्समः प्रेङ्खस्ततः परम् ॥ २५०
ततो निष्कूजितः श्येनः क्रम उद्घाटितः परम् ।
रञ्जितः संनिवृत्तश्च प्रवृत्तो वेणुसंज्ञकः ॥ २५१ ॥
ललितस्वर-हुंकारौ ह्रादमानावलोकितौ

संचारिणोऽप्यलंकाराः पञ्चविंशतिरीरिताः ॥ २५२ ॥
संचारिताश्च सर्वत्र संचारिणो यतस्ततः ।
मन्द्रो बिन्दुशिरा ज्ञेयस्तारो मस्तकशेखरः ॥ २५३ ॥
स-री ग-मौ म-गौ यत्र रि-सौ स-री ग-री स-री ।
ग-मौ गुरुद्वयेनैव स मन्द्रादिस्तदा भवेत् ।
स्थानत्रयविशिष्टोऽयमारम्भे मन्द्रपूर्वकः ॥ २५४ ॥

स रि ग म म ग रि स स रि ग रि स रि म म।
रि ग म प प म ग रि रि ग म ग रि ग म प।
ग म प ध ध प म ग ग म प म ग म प ध।
म प ध नि नि ध प म म प ध प म प ध नि।
प ध नि स स नि ध प प ध नि ध प ध नि स।

इति मन्द्रादिः । १ ।

एवं ज्ञेयोऽवरोहस्तु गीतशास्त्रविचक्षणैः ॥ २५५ ॥
स-गौ रि-गौ म-गौ यत्र रि-गौ रि-गौ रि-सौ स-री ।
ग-मौ ज-गणयुक्तोऽसौ मन्द्रमध्यः सुशोभितः ॥२५६

स ग रि ग म ग रि ग रिं ग रि स स रि ग म ।
रि म ग म प म ग म ग म ग रि रि ग म प ।
ग प म प ध प म प म प म ग ग म प ध ।
म ध प ध नि ध प ध प ध प म म प ध नि ।
प नि धनि स नि धनि धनि धप प ध नि स ॥

इति मन्द्रमध्यः । २ ।

मन्द्रान्तश्च स विज्ञेयो न-गणेन सुशोभितः ।
स-द्वयं रि-द्वयं गौ च यस्मिन्म गौ रि-गौ रि-सौ ।
मन्द्रस्थानं च यस्यान्ते मन्द्रान्तं तं प्रचक्षते ॥ २५७ ॥

स स रि रि ग ग म म रि ग रि स।
रिरि ग ग म म प म ग म ग रि।

म ग म म प प ध प म प म ग ।
म म प प ध ध नि ध प ध प म ।
प प ध ध नि नि म नि ध नि ध प ॥



इति मन्द्रान्तः । ३ ।

त्यक्तान्तरं स्वरद्वंद्वं त्यक्तादारभ्यते पुनः ।
युगं तादृक्समारोहे तदा प्रस्तार उच्यते ॥ २५८ ॥

स म । रि प । ग ध म नि । ध स ॥

इति प्रस्तारः । ४ ।

आद्यं द्वयं त्रिरावृत्त्या तृतीयं च द्वितीयकम् ।
उक्त्वा तत्र प्रसादं तमलंकारं जगुर्बुधाः ॥२५९॥

सरि सरि सरि गरि । रिग रिग रिग मग ।
गम गम गम पम । मप मप मप धप ।
पध पध पध निध । धनि धनि धनि सनि ॥

इति प्रसादः । ५ ।

स-गौ रि-मौ स-री गो मो यस्मिन्निति क्रमो भवेत् ।
व्यावृत्तं तं विजानीयाद्गीतशास्त्रविशारदः ॥ २६० ॥

स ग रि म म रि ग स । रि स ग प रि ग म म ।
ग प म ध ग म प ध । म ध प नि म प ध नि ।
प नि ध स प ध नि स ॥

इति व्यावृत्तः । ६ ।

स-गौ रि-मौ म-री गः सः स-री गो म इति क्रमः ।
यदा भवेत्तदा ज्ञेयोऽलंकारश्चलितो बुधैः ॥ २६१ ॥

स ग रि म म रि ग स स रि ग म ।
रि म ग प प ग म रि रि ग म प ।
ग प म ध ध म प ग ग म प ध ।
म ध प नि नि प ध म म प ध नि ।

प नि ध स स ध नि प प ध नि स ।

इति चलितः । ७ ।

आद्यं तृतीमुच्चार्य तुर्यं द्वितीयमेव च ।
परिवर्त्तस्तदा ज्ञेयो यति-तालेन शोभितः ॥ २१२ ॥

स ग म रि । रि म प ग । ग प ध म ।
म ध नि प । प नि स ध । ध स रि स ॥

इति परिवर्तः । ८ ।

क्रमात्स्वरत्रयं यत्र जगुराक्षेपकं बुधाः ॥ २१३ ॥

सरिग । रिगम । गमप । मपध । पधनि । धनिस ॥

इत्याक्षेपः । ९ ।

आद्यो दीर्घस्त्रिरावृत्तः स्वरो ह्रस्वस्तदुत्तरः ।
पुनराद्यस्तु दीर्घोऽपि तथा दीर्घस्तृतीयकः ।
बिन्दुसंज्ञे त्वलंकारे प्रोक्ता गीतविचक्षणैः ॥ २१४ ॥

सा सा सारिसा गा । री री रीगरी मा ।
गा गा गामगा पा । मा मा मापमा धा ।
पा पा पाधपा नी । धा धा धानिधा सा ॥

इति बिन्दुः । १० ।

स-रि-ग रीत्यलंकार उद्वाहिते स्वरा इमे ॥ २१५ ॥

ग रि ग रि । रि ग म ग । ग म प म ।
म प ध प । प ध नि ध । ध नि स नि ॥

इत्युद्वादितः । ११ ।

आद्यात्तुर्यस्त्रिरावृत्तः पुनराद्यश्चतुर्थकः ।
इत्येते स्युरलंकारे ऊर्मिसंज्ञे सुखप्रदे ॥ २१६ ॥

स मगम सम । रि पपप रिप । ग धधध गध ।
स निनिनि सनि । प ससस पस ।

इत्यूर्मिः । १२ ।

स-रि-गानां तथा मस्याऽऽरोहणं चावरोहणम् ।
पुनरारोहणं यत्र समं वदति तं सुधीः ॥ २६७ ॥

स रि ग म म ग रि स स रि ग म ।
रि ग म प प म ग रि रि ग म प ।
ग म प ध ध प म ग ग म प ध ।
प ध नि स स नि ध प प ध नि स ॥

इति समः । १३ ।

द्विद्व्यन्तरे स्वरद्वन्द्वे त्यक्तादारम्भ ईदृशः ।
क्रमादेकैकहानाच्च प्रेङ्ख उक्तो मनीषिभिः ॥ २६८ ॥

सस मम । रिरि पप । गग धध । मम निनि पप सस ॥

इति प्रेङ्खः । १४ ।

आद्यतुर्यौ द्विरावृत्त्या पुनस्तावत्क्रमो भवेत् ।
क्रमादेकैकहानाच्च निष्कूजितः प्रकीर्तितः ॥ २६९ ॥

सम सम सरिगम । रिप रिप रिगमप ।
गध गध गमपध । मनि मनि मपधनि ।
पस पस पधनिस ॥

इति निष्कूजितः । १४ ।

आद्यस्वरः क्रमात्सर्वान्स्पृशन्नेकैकमाव्रजेत् ।
अलंकारस्तु श्येनः स्यादनिबद्धः सुखप्रदः ॥ २७० ॥

सरि सग सग सप सध सनि सम ।
रिग रिम रिप रिध रिनि रिस ।
गम गप गध गनि गस ।
मप मध मनि मस ।
पध पनि पस ।
धनि धस ।
निस ॥

इति श्येनः । १५ ।

स-री रि-गौ ग-मौ चेति क्रमाख्यालंकृतिक्रमः ॥२७१॥

स रि रि ग ग म । रि ग ग म म प ।
ग म म प प ध । म प प ध धनि ।
प ध धनि नि ग ॥

इति क्रमः । १६ ।

स-गौ स-गौ स-री गो म इति क्रमो यदा भवेत् ।
उद्घाटितस्तदा ज्ञेय आन्दोलने शोभितः ॥ २७२ ॥

सग सग सरिगम । रिम रिम रिगमप ।
गप गप गमपध । मध मध मपधनि ।
मनि मनि पधनिस ॥

इत्युद्घाटितः १७ ।

स-गौ रि-गौ स-री गो म इति क्रमो यदा भवेत् ।
रञ्जितः स्यादलंकारः करुणातालशोभितः ॥ २७३ ॥

सग रिग सरिगम । रिम गम रिगमप ।
गप मप गमपध । मध पध मपधनि ।
पनि धनि पध निस ॥

इति रञ्जितः । १८ ।

स-रि-गा रि-ग-मा यत्र ग रि-सा रि-ग-मास्ततः ।
संनिवृत्तः स विज्ञेयः सर्वदा सुखदायकः ॥ २७४ ॥

स रि ग रि ग म ग रि स रि ग म ।
रि ग म ग म प म ग रि ग म प ।
म प ध प ध नि ध प म प ध नि ।
प ध नि ध नि स नि ध प ध नि स ॥

इति संनिवृत्तः । १९ ।

संनिवृत्तस्वरैरेव द्विगुणः सन्प्रवृत्तकः ।

इति प्रवृत्तकः । २० ।

वेणुः स-म-ग-मैर्ज्ञेयः स-रि-ग-मैस्तथैव च ॥ २७५ ॥

समगम सरिगम । रिपमप रिगमप ।

गधपध गमपध । मनिधनि ममधनि ।

पसनिस पधनिस ॥

इति वेणुः । २१ ।

आद्यं तुर्यं तृतीयं च द्विरावृत्त्या रि-सौ स-री ।

ग-री स-री ग-मौ यत्र सुखदो ललितस्वरः ॥२७६॥

सस मम गप रिस सरि गरि सरि गम ।

रिरि पप मम गरि रिग मग रिग मप ।

गग धध पप सग गस पस गम पध ।

मम निनि धध पम मप धप मप धनि ।

पप सस निनि धप पध निध पध निस ॥

इति ललितस्वरः । २२ ।

द्वाभ्यां द्वाभ्यां स्वराभ्यां यः संवादिभ्यां स हुंकृतिः ;

सस पप । रिरि धध । गग निनि । मम सस ।

इति हुंकारः । २३ ।

[ स-म-ग-रीत्यलंकारे ह्लादमाने स्वरा इमे ॥ २७७ ॥

स म ग रि । रि प म ग । ग ध प म ।

म नि ध प । प स नि ध ॥

इति ह्लादमानः । २४ ।

आद्यं तुर्यं त्रिरावृत्त्याऽवलोकितः प्रकीर्तितः ।

ससस ममम । रिरिरि पपप । गगग धधध ।

ममम निनिनि । पपप ससस ॥

इत्यवलोकितः । २५ ।

एवं संचार्यलंकारा आरोहे चावरोहिणि ॥ २७८ ॥
पुनः सप्त च गीतज्ञैरलंकाराः प्रकीर्तिताः ॥ २७९ ॥
इन्द्रनीलो महावज्रो निर्दोषः सीर कोकिलो ।
आवर्तकः सदानन्द इत्येषां लक्ष्म कथ्यते ॥ २८० ॥
स-री ग-मौ ग-री यत्र स-रो ग-री स-री ग-मौ ।
**इन्द्रनील** स विज्ञेयो ध्रुवतालेन शोभितः ॥ २८१ ॥

सरि गम गरि सरिगरि सरिगम ।
रिग मप मग रिगमग रिगमप ।
गम पध पम गमपम गमपध ।
मप धनि धप मपधप ममधनि ।
पध निस निध पधनिध पधनिस ॥

**इतीन्द्रनीलः । १ ।**

स-री ग-री स-री यत्र स-री गमौ तथैव च ।
अलंकारो **महावज्रो** मण्ठतालेन शोभितः ॥ २८२ ॥

सरि गरि सरि सरिगम । रिग मग रिग रिगमप ।
गम पम गम गमधप । मप धप मप मपधीन ।
पध निध पध पधनिस ॥

**इति महावज्रः । २ ।**

स-री स-री ग-मावेति क्रम एव यदा भवेत् ।
**निर्दोषः** स्यादलंकारो रूपकेण सुशोभितः ॥ २८३ ॥

सरि सरि गम । रिग रिग मप ।
गम गम पध । मप मप धनि ।
मध पध निस ॥

**इति निर्दोषः । ३ ।**

स-री ततः स-री गश्चेत्ततः स री ग-मौ तदा ।
सरिरूयोऽयमलंकारो झंपतालेन शोभितः ॥ २८४ ॥

स रि सरिग सरिगम । रिग रिगम रिगमप ।
ग म गमप गमपध । मम मपध मपधनि ।
प ध पधनि पधनिस ॥

इति सीर । ४ ।

स-री गश्च स-री गो म इत्येतैः कलिका भवेत् ।
त्रिपुटाख्येन तालेन कलितः **कोकिलो** भवेत् ॥२८५॥

सरिग सरिगम । रिगम रिगमप ।
गमप गमपध । मपध मपधनि ।
पधनि पधनिस ॥

इति कोकिलः । ५ ।

स-री ग-री स-री सश्च रि स्वरस्तु स-री ग-मौ ।
यत्र स्युरङ्कतालेन तमावर्तं बुधा जगुः ॥ २८६ ॥

सरि गरि सरि सरि सरिगम ।
रीग मग रिग रिग रिगमप ।
गम पम गम गम गमपध ।
मप धप मप मप मपधनि ।
पध निध पध पध पधनिस ॥

इत्यावर्तः । ६ ।

स-रि-ग-मैः **सदानन्दो** लघुतालेन शोभितः ॥२८७॥

सरिगम । रिगमप । गमपध । मपधनि । पधनिस ॥

इति सदानन्दः । ७ ।

गीतोपयोगिनः सप्त तालयुक्ताः प्रदर्शिताः ।
अलंकाराः पुनः पञ्च रागोपयोगिनः स्मृताः ॥ २८८ ॥
चक्राकारो जवश्चैव शङ्खः पद्मनिभः स्मृतः ।
वारिदश्चेति तेषां हि लक्षणं चापि कथ्यते ॥ २८९ ॥
स्वरैरेभिश्चतुर्भिश्च षड्जेनापि त्रिभी रिभिः ।

चक्राकारः स विज्ञेयश्चक्रसादृश्यरूपवान् ॥ २९० ॥

रिरिरिरि स रिरिरि ।

ग ग ग ग रि ग ग ग ।

म म म म ग म म म ।

प प प प म प प प ।

ध ध ध ध प ध ध ध ।

निनिनिनि ध निनिनि ।

स स स स नि स स स ॥

इति चक्राकारः । १ ।

क्रमात्सर्वान्स्वरानुक्त्वाऽथान्त्यादेकैकहानतः ।

अलंकारो जवो नाम प्रकाशितो हनूमता ॥ २९१ ॥

स रि ग म प ध नि स नि ध प म ग रि स ।

स रि ग म प ध नि ध प म ग रि स ।

स रि ग म प ध प म ग रि स ।

स रि ग म प म ग रि स ।

स रि ग म ग रि स ।

स रि ग रि स ।

स रि स ॥

इति जवः । २ ।

दीर्घान्त्यस्य द्विरावृत्तिरुपान्त्यौ तदधः स्वरौ ।

यत्रेति स्वरसंबन्धः शङ्खो ज्ञेयो मनीषिभिः ॥ २९२ ॥

सासा निध । नीनी धप । धाधा पम ।

पापा मग । मामा गरि । गागा रिस ॥

इति शङ्खः । ३ ।

स-री षड्जत्रयं रिश्च पद्माकारेऽत्र ग-द्वयम् ॥ २९३ ॥

स रि स स स रि ग ग ।

रि ग रिरिरि ग म म ।
ग म ग ग ग म प प ।
म प म म म प ध ध ।
प ध प प प ध निनि ।
ध नि ध ध ध नि स स ॥

इति पद्माकारः । ४ ।

आद्यं स्वरं सकृत्प्रोच्य त्रिरावृत्त्या च सप्तमम् ।
वारिदः स्यादलंकारः क्रमादेकैकहानतः ॥ २९४ ॥

स निनिनि । स धधध । स पपप । स ममम ।
स गगग । सरिरिरि । स ससस ॥

इति वारिदः । ५ ।

इति सर्वेऽप्यलंकारा अष्टषष्टिः प्रकीर्तिताः ॥ २९५ ॥
अलंकाराद्विना रागा विस्तारं नाऽऽप्नुवन्ति हि ।
एतैः कृत्वा प्रगातॄणां स्वरतालप्रवीणता ॥ २९६ ॥
अलंकाराश्च रागेषु त्रिविधेषु त्रिधा मताः ।
त एते मेलभेदेन ह्यनन्ताः शास्त्रसंमताः ॥ २९७ ॥
शुद्धाः स्युर्जातयः सप्त ताः षड्जादिस्वराभिधाः ।
आद्या षड्जा तु विज्ञेया द्वितीया चार्षभी स्मृता ॥ २९८॥
गान्धारी तु तृतीया सा चतुर्थी मध्यमा परा ।
पञ्चमी पञ्चमी ज्ञेया षष्ठी तु धैवती पुनः ॥ २९९ ॥
सप्तमी स्यात्तु नैषादी तासां लक्ष्म च कथ्यते ।
इमावंशस्वरे स्थित्वा स्थित्वा यदि विलम्बितः॥ ३०० ॥
गायेतां जातयस्ताः स्युस्तत्तदंशस्वराभिधाः ।
रागाणां जीवभूता ये प्रोक्तास्तेंऽशस्वरा बुधैः ॥३०१॥
एकास्फालनसंजातश्च्यावितः स्वर उच्यते ।
च्यवनं जायते येषु तस्मात्ते च्याविता मताः ॥३०२॥

* * * * * *

शारीरोऽपि स विज्ञेयो स्थानत्यागेन संमतः ।
एकत्र कम्पितो ज्ञेयो हननाभ्यां स्वरद्वयम् ॥ ३०३ ॥
प्रत्याहत इति ख्यातो हन्त्येकया स्वरद्वयम् ।
एकत्र हन्यते यस्तु द्विवारं स द्विराहतः ॥ ३०४ ॥
स्फुरितो गमको ज्ञेयो हन्त्यत्यन्तं स्वरद्वयम् ।
यत्र च हननादूर्ध्वं तत्रैवानाहतः स्वरः ॥ ३०५ ॥
गमकः शान्तसंज्ञोऽसाविति सूरिविनिर्णयः ।
चतुर्थांशोऽपरेभ्योऽसौ द्रुतस्य तिरिपो मतः ॥ ३०६ ॥
एकत्राऽऽस्फालनमिव सर्वे ते बोधिता यदा ।
स्वरानष्टावभिव्याप्तास्तदा घर्षण उच्यते ॥ ३०७ ॥
अवघर्षणमप्येवं ज्ञेयं लक्ष्मविचक्षणैः ।
विकर्षणः स विज्ञेयः स्वस्थानेऽन्यं विकर्षति ॥ ३०८ ॥
अग्रे गत्वा निवृत्तोऽसौ पुनः स्वस्थान उच्यते ।
पश्चाद्गत्वा निवृत्तोऽसावग्रस्वस्थानसंज्ञकः ॥ ३०९ ॥
रेफयुक्तस्य वर्णस्य कारणं कर्तरी मता ।
मध्यमातर्जनीभ्यां या क्रमात्सा संभवा बहिः ॥३१०॥
यदुद्दिश्य क्रियारम्भस्तस्यैव श्रवणं स्फुटम् ।
स्वरस्याभिभवान्निम्न्यमन्यस्याऽऽहुर्मनीषिणः ॥ ३११ ॥
स्वरद्वयमभिव्याप्य सुढालुःपूर्ववद्भवेत् ।
हुम्फितस्यैकदेशत्वान्मुद्रा न पृथगुच्यते ॥ ३१२ ॥
एवंलक्षणसंयुक्ता गमका बहवो मताः ।
न ते मयोदिताः सर्वे ग्रन्थविस्तरभीतिना ॥ ३१३ ॥

इति गमकाः ।

---

१० दिता ग्रन्थविस्वरातिभियाऽधुना ।

स्वरस्य हेतुभूताया वीणायाश्चाक्षुषत्वतः ।
तत्र स्वरविबोधार्थं स्थानलक्षणमुच्यते ॥ ३१४ ॥
ध्वन्यवच्छिन्नवीणायां मध्ये तारकसंस्थितः ।
उभयोः षड्जयोर्मध्ये मध्यमं स्वरमाचरेत् ॥ ३१५ ॥
त्रिभागात्मकवीणायां पञ्चमः स्यातदग्रिमे ।
षड्जपञ्चमयोर्मध्ये गान्धारस्य स्थितिर्भवेत् ॥ ३१६ ॥
स-पयोः पूर्वभागे च स्थापनीयोऽथ रि-स्वरः ।
स-पयोर्मध्यदेशे तु धैवतं स्वरमाचरेत् ॥ ३१७ ॥
तत्रांशद्वयसंत्यागान्निषादस्य स्थितिर्भवेत् ॥ ३१८ ॥

इति शुद्धस्वराः ।

भागत्रयान्विते मध्ये मेरो ऋषभसंज्ञितात् ।
भागद्वयोत्तरं मेरोः कुर्यात्कोमल-रि-स्वरम् ॥ ३१९ ॥
मेरुधैवतयोर्मध्ये तीव्रगान्धारमाचरेत् ॥ ३२० ॥
भागत्रयविशिष्टेऽस्मिंस्तीव्रगान्धार-षड्जयोः ।
पूर्वभागोत्तरं मध्ये मं तीव्रतममाचरेत् ॥ ३२१ ॥
भागत्रयान्विते मध्ये पञ्चमोत्तरषड्जयाः ।
कोमलो धैवतः स्थाप्यः पूर्वभागे मनीषिभिः ॥ ३२२ ॥
तथैव ध-सयोर्मध्ये भागत्रयसमन्विते ।
पूर्वभागद्वयादूर्ध्वं निषादं तीव्रमाचरेत् ॥ ३२३ ॥
ऋषभः शुद्ध एवासौ पूर्वगान्धार इष्यते ।
गान्धारः शुद्ध एवासौ रिस्तीव्रतर इष्यते ॥ ३२४ ॥
अतितीव्रतमो गः स्यान्मध्यमः शुद्ध एव हि ।
धैवतः शुद्ध एवासौ निषादः पूर्वसंज्ञकः ।
निषादः शुद्ध एवासौ धस्तीव्रतर इष्यते ॥ ३२५ ॥
एवं स्यात्सर्वयन्त्रेषु स्वरस्थानस्य लक्षणम् ॥ ३२६ ॥

इति विकृतस्वराः ।

स्वरज्ञानविहीनेभ्यो मार्गोऽयं बोधितो मया।
स्वरसंवादिताज्ञानं स्वरस्थापनकारणम् ॥ ३२७ ॥
प्रवर्तन्ते स्वराः सर्वे सदा संवादिरूपिणः।
षड्ज–पञ्चम–भावेन षड्जे ज्ञेयाः स्वरा बुधैः।
ग-नि-भावेन गान्धारे म-स-भावेन मध्यमे ॥ ३२८ ॥

इति स्वरस्थानलक्षणम्।

अथ शुद्धैः स्वरैर्मेलाः कथ्यन्ते विकृतैरपि।
तेषां मितिः ख-वेदौ च वह्निश्चंद्रद्वयं तथा ॥ ३२९ ॥
मेलः स्वरसमूहः स्याद्रागव्यञ्जनशक्तिमान्।
श्लिष्टोच्चारणमेवात्र समुदायः प्रकीर्तितः ॥ ३३० ॥
आद्याद्यमूर्छनाभिश्च मेला ज्ञेया विचक्षणैः ॥ ३३१ ॥
सप्तभिश्च स्वरैः पूर्णः षड्भिस्तैः षाडवो मतः।
औडवः पञ्चभिः प्रोक्त एवं मेलस्त्रिधा मतः ॥ ३३२ ॥
षाडवा औडवाः षड्जं विना मेला न ते मताः।
शुद्धत्वविकृतत्वाभ्यामिति मेला मयोदिताः ॥ ३३३ ॥
तत्र ये च प्रसिद्धाः स्यू रञ्जका ये विशेषतः
लक्षणानि ब्रुवे तेषां संमत्या च हनूमतः ॥ ३३४ ॥
गीतियुक्ताश्च ये रागाः शुद्धास्ते शास्त्रसंमताः।
शुद्धा भिन्ना ततो गौडी वेसरा च ततः परम्।
साधारणीति पञ्चैतास्तासां लक्षणमुच्यते ॥ ३३५ ॥
शुद्धा वक्रस्वरा ज्ञेया ललितस्वरसंयुता।
भिन्ना सूक्ष्मस्वरैर्युक्तैर्मधुरैर्गमकैर्युता ॥ ३३६ ॥

---

१ दर्शितो। २ °त्र स तूदारः प्र°।

आरोहणावरोहाभ्यां स्थानत्रयसुशोभिता ।
अखण्डितास्थितिः स्थानत्रये गौडी मता सताम्॥३३७॥
हुम्फितकम्पिताभ्यां च द्रुतद्रुततरैः स्वरैः ।
वेगस्वरैश्चतुर्भिश्च वर्णैः सा वेसरा मता ॥ ३३८ ॥
चतुर्गीतगतं लक्ष्म श्रिता साधारणी मता ॥ ३३९ ॥

इति गीतयः ।

रञ्जकः स्वरसंदर्भो राग इत्यभिधीयते ।
सर्वेषामपि रागाणां समयोऽत्र निरूप्यते ॥ ३४० ॥
धनाश्रीर्मालवश्रीश्च रक्तहंसो वसन्तकः ।
देशाख्यो देशकारी च भूपाली प्रसभस्तथा ॥ ३४१ ॥
मध्यमादिः कोल्हहासो बङ्गाली भैरवस्तथा ।
नारायणो बिभासश्च प्रातर्गेया इमे बुधैः ॥ ३४२ ॥
गुर्जरी वेरगुप्तिश्च कौमारी कज्जली तथा ।
शंकराभरणस्तोडी सोरठी रामकृत्तथा ॥ ३४३ ॥
नादरामक्रियारागो वेलावली कुडाविका ।
गुणकरी जयश्रीश्च तथैव शिववल्लभा ॥ ३४४ ॥
एते रागाः प्रगीयन्ते प्रथमप्रहरोत्तरम् ॥ ३४५ ॥
हंसाख्यो दीपको रागः काम्भोदी कङ्कणस्तथा ।
सारङ्गो देवगान्धारी रागो देवगिरिः परा ॥ ३४६ ॥
ऐरावतोऽर्जुनो रागो रत्नावली ततः परम् ।
असावरी च हिन्दोलो मनोहरस्तथैव च ॥ ३४७ ॥
वैजयन्ती तथा रागाः सर्वाश्चैव वराटिकाः ।
एते रागाः प्रगीयन्ते द्वितीयप्रहरोत्तरम् ॥ ३४८ ॥
घण्टरागस्तथा ढक्कः श्रीरागः कोकिलः पुनः ।
सौदामिनी कुरङ्गश्च त्रिवेणी च सुरालयः ॥ ३४९ ॥

---

१ भवेत् ।

पूर्वी विहङ्गडो रागः सामन्तः कुमुदस्तथा ।
वडहंसः पहाडी च चक्रधारस्तथैव च ॥ ३५० ॥
कल्याणाख्यवराली च मञ्जुभाषा ततः परम् ।
सिंहरवस्तथा रागस्तथैव पठमञ्जरी ॥ ३५१ ॥
सर्वे गौलास्तथा नाटाः कल्पतरुस्तथैव च ।
एते रागाः प्रगीयन्ते तृतीयप्रहरोत्तरम् ॥ ३५२ ॥
सैन्धवो मेघरागश्च मल्लारी पञ्चमस्तथा ।
नीलाम्बरी मुखारी च भैरवी ललितस्तथा ॥ ३५३ ॥
मेघनादस्तथा देशी रागो मङ्गलकोशकः ।
गौडरागश्च मल्लारो राग आनन्दभैरवी ॥ ३५४ ॥
शंकरानन्दमानव्यौ राजधानी च शर्वरी ।
सावेरीराग इत्येताः सर्वदा च सुखप्रदाः ॥ ३५५ ॥
असाधारणधर्मा ये लक्षणत्वेन कीर्तिताः ।
तैरेव रागभेदाः स्युस्तांस्तु वक्ष्येऽत्र कालतः ॥ ३५६ ॥
न्यासांशौ यत्र नोच्येते तत्र षड्जं विदुर्बुधाः ।
आदावुद्गृह्यते येन स तानोद्ग्रहकारकः ॥ ३५७ ॥
शुद्धमेलोद्भवः पूर्णो धैवतादिकमूर्छनः ।
आरोहे ग-नि-वर्जः स्याद्रागः सैन्धवनामकः ।
आम्रेडितस्वरैर्युक्तः स्फुरितेन च शोभितः ३५८ ॥
धसरिममपपधधा । सनिधधपमपमागगारिस । धसरिमम-
गरिगरिपमगरि । निनिधमपमगरि । पपमगरिगगगरिस ॥

इति सैन्धवः । सर्वकालीयः । १ ।

आरोहे रि-ध-हीना स्यात्पूर्णा शुद्धस्वरैर्युता ।
गान्धारस्वरपूर्वा स्याद्धनाश्रीर्मध्यमान्तका ॥ ३५९ ॥
गमपनिस । रिसानिधपम । गमपमगरिस । गममनिपनि-
स । रिसनिसानिधपम । गमपमपमागमगरिस । गमगमप-

निपनिसगसमा । पमपमगरिस निधपम । गमपमपगरि-
सापनिसरिसनिसस ॥

इति संपूर्णधसाश्रीः । प्रातःकालीया । २ ।

धनाश्रीश्च ध-हीना सा रि-ध-हीनाऽपि संमता ॥ ३६० ॥

इति षाडवौडवधनाश्रीयौ ३।४।

षड्जादिमूर्छनोपेतः षड्जत्रयसमन्वितः ।
ग-नि-हीनोऽपि मल्लारो वर्षासु सुखदायकः ॥ ३६१ ॥
यतो वर्षासु गेयोऽयं मेघ इत्यपि कीर्तितः ।
अकालरागगानेन जातदोषं हरत्ययम् ॥ ३६२ ॥

ससासारिमपधससधपमरिस । ससरिमरिमपधससासाध-
पधरिससानिध ससपधधममरिसाससरिमरिमपमरिसरिसरिध-
ससा ॥

इति मेघमल्लारः । सर्वदा । ५ ।

नीलाम्बरी तु संपूर्णा षड्जपूर्वकमूर्छना ।
शुद्धमेलसमुद्भूता बहुकम्पमनोहरा ॥ ३६३ ॥
अंशन्यासौ प-मौ यत्र ग-री स-नी तथैव च ।
षड्जात्पञ्चम उद्ग्रानं पञ्चमात्स-स्वरो पुनः ॥ ३६४ ॥

सरिगमपधनिसासनिधपमपमासारिगमपमागारिगमपमरिग-
सुप्पप्पपसपपमप्पपम । पप्पमपप्पमानिधपमगरिगमपससरि-
गमसपधनिधपमगरिगमपमगारिसगापगागरिगमागागरिसरि-
सासस्मतस्मानिसस्मसानिधनिसरिसनिससा ॥

इति नीलाम्बरी । सर्वदा । ६ ।

रि-हीना मालवश्रीः स्याच्छुद्धमेलस्वरोद्भवा ।
मध्यमादिस्वरोद्ग्राहा धांशयुक्ताऽन्त्यपा स्मृता ॥ ३६५ ॥

मपधनिसगसनिसनिधधपधधधपमपपममगसाधधधपमम-

पापा । निधनिसममगसगसानिसानिनिधपधधपमपापामागस-
निधनिसस ॥

इति मालवश्रीः । प्रातःकालीया । ७ ।

ग-हीनो रक्तहंसः स्यादारोहे नि-स्वरोज्झितः ।
अवरोहे ध-वर्जः स्यात्षड्जपूर्वकमूर्छनः ॥ ३६६ ॥

सरिमपधससनिपपरिस । सारिमपधसरिमपधपधापपपमा-
रिमरिसधमसा ॥

रि-स्वरादिस्वराराम्भ रि-कोमल-ध-कोमला ।
ग-तीव्रा सा नि-तीव्रा च गौरी न्यंशस्वरा मता ३६७
आरोहे ग-ध-हीना सा निकम्पनमनोहरा ।
आरोहे यदि गान्धारो मध्यमावधिमूर्छना ॥ ३६८ ॥

रिमपनीसानिधपसगरिगरिसा । निसरिमागरिगरिसानि-
निसानिस । निधपमपसधपमपमगरिगरिसानीसानीसा । मप-
धपमगरिसनीसा । रिमपमगरिमगरिनीसा । रिमागरिगरिसा-
नीसानिधपमगरिसनीसा । रिरिगामगरिसामससमा ॥

इति गौरी । तृतीयप्रहरोत्तरम् । ९ ।

गौरीमेलसमुद्भूता मल्लारी नि-स्वरोज्झिता ।
आरोहणे ग-हीना स्यात्षड्जादिस्वरसंभवा ॥ ३६९ ॥

सरिमपधसरि । सधसधपमपमागरिसरिरिससधसरिमप-
मगरिसरिमसधसस्मास्मा । रिमपधमपधधससरिरिरिरिरिमग-
रिसधधसधपमपामगरिरिसधधधसस्म ॥

इति मल्लारी । सर्वदा । १० ।

पञ्चमो रि-प हीनः स्यात्तीव्रगः सादिमः स्मृतः ।
मध्यमन्याससंयुक्तो मध्यमांशेन शोभितः ॥ ३७० ॥

सगमधनिससनिधसगमगसमगमा । धनिससगसगमसनि-

धनिसनिधनिम । सनिसनिधमगसगमगमगस । निधनि-
सधाममागसनिधनिसासा ॥

इति पञ्चमः । सर्वदा । ११ ।

षड्जादिमूर्छने मान्ते ग-नी तीव्रौ वसन्तके ॥३७१॥

सरिगमपधनिससनिधपमपमगमा । गमपधनिधपमपम-
मागसा । सरिगमपधसरिगदपमगरिससनिधपधपमपममगम-
गमपमधधपगरिसनि धनिससा ॥

इति वसन्तः । प्रातःकालीयः । १२ ।

रि-तीव्रतरसंयुक्तो ग-तीव्रेणापि संयुतः ।
ध-ग-वर्जोऽवरोहे स्याद्गान्धारस्वरमूर्छनः ।
तीव्रो यत्र निषादः स्याद्देशाख्यः स विराजते ॥३७२॥

गपधससनिपममरिसगगपपगपधसममपसममरिसरि-
ससनिपगपधस स्मा । रिनीपाममरिससनिपगपधससा ॥

इति देशाख्यः । प्रातःकालीयः । १३ ।

देशकार्यां ग-नी तीव्रौ धांशो धादिकमूर्छना ॥ ३७३ ॥

* * * * * *

धनिसरिगमपधनिधनीधपमपमागरीसनीधधनिसस्म । ग-
मपधनिधध पमपमगरीसनीधधनिसस्मा ॥

इति देशकारी । प्रातःकालीया । १४ ।

ऋषभः कोमलो यत्र गान्धारः पूर्वसंज्ञकः ।
सुखार्यां धैवतोद्ग्राहो नि-धौ पूर्वाख्यकोमलौ ।
आरोहे ग-नि-हीनायां न्यासांशौ षड्जपञ्चमौ ३७४

धसरिममपनिनिधपमगगगरिसारिसस । धसरिममपपध-
ससरिगगरि रिसनिधनिनिधपमपमागरिसरिससधसस ।

इति सुखारी । सर्वदा । १५ ।

स-स्वरांशग्रहन्यासा भैरवी स्याद्ध-कोमला ।

रिणारोहे तु पन्यासा पञ्चमेनोभयोरपि ।
षड्जेनाथावरोहे तु सर्वदा सुखदायिनी ॥ ३७५ ॥

सरिगमपधनि । सनिधपमगरिस । सरिगमपमगरिसमग-रिगरिसनिध निसा । सगमगमगमपमगरिस । धापमगरिस-गरिनिसगगमगमपम गरिस गगमानिनिधमगरिससगरिसनि-निसस ॥

इति भैरवी । सर्वदा । १६ ।

म-नि वर्ज्या तु भूपाली रि-धौ यत्र च कोमलौ ।
गान्धारोद्ग्रहसंयुक्ता रि-न्यासा गांशशोभिता ॥ ३७६ ॥

गपधसारिगरिससाधपगपगारिगरिसधसा । गपधसरिग-रिगगगर रिरिरिरिगरिगंरिसधधससा ॥

इति भूपाली । प्रातःकालीया । १७ ।

षड्जादिमूर्छनोपेतः प्रसभः पञ्चमोज्झितः ॥ ३७७ ॥

सरिगमधनिसनिधमगरिस । गगरिसनिधनिसनिधमगरि-सासरिगमध निस । मगरिसनिध । निसनिधनिधमगगरिस-निससा ॥

इति प्रसभः । प्रातःकालीयः । १८ ।

मोज्झितः कोल्लहासः स्याद्गान्धारादिकमूर्छनः ।
अवरोहे ध-वर्जः स्यात्षाडवः परिकीर्तितः ॥ ३७८ ॥

गपधनिसरिगरिससनिपगपगरिस । सरिगपधनिधनिपप-गपपपधनि सरिसनिसनिपगपगरिगरिसनिससा ॥

इति कोल्लहासः । प्रातःकालीयः । १९ ।

भैरवे तु रि-पौ न स्तो धादिमे न्यासमध्यमे ।
तत्रोक्तौ तु ग-नी तीव्रौ कोमलो धैवतः स्मृतः ॥ ३७९ ॥

धनिसगमधनिसमगमनिधनिसनिधानिनिमगम । सगमध-मगमगमगसनिधनिसधनिनिधमिससा ॥

इति भैरवः । प्रातःकालीयः । २० ।

कोमलाख्यौ रि-धौ तीव्रौ ग-नी वसन्तभैरवे ।
धैवतांशग्रहन्यासो मध्यमांशोऽपि संमतः ॥ ३८० ॥

पनिसरिगमपामानरीसानीसरिनिसनिधा । धनिसा । मगरिसनिसरिनिसानिधा धनीसस्मा । धनिसरिगम्मा । धधपमपमगम्म । सरिगमगरिसनिधनीसासा ॥

इति वसन्तभैरवः । प्रातःकालीयः । २१ ।

मध्यमादौ ग-धौ न स्तो मूर्छना मध्यमादिका ।
तत्र त्वंशस्वराः प्रोक्ता रि-म-नयो मुनीश्वरैः ॥३८१॥

मपनिसरिसरिसनिसनिपमपनिपमपमरिमरिस । निसरिमरिसारिरिरिरिमरिस । सरिसरिनिसा । निसनिपमगमरिमरिसनिसस्मा । निनीपनिसमरिसानिससा ॥

इति मध्यमादिः । प्रातःकालीया । २२ ।

वङ्गाली रि-ध-हीना स्यान्मतीव्रतरसंयुता ।
नि-तीव्रेणापि संयुक्ता स-स्वरोत्थितमूर्छना ॥ ३८२ ॥

सगमपनिससनिपममगस । सगमपपनिपमपमगमपमगमगसनिसनिसगसनिसनिपमपनिपमपम । मनिसा ॥

इति वङ्गाली । प्रातःकालीया । २३ ।

नारायण्यां ग-नी तीव्रौ गान्धारादिकमूर्छना ।
आरोहे ग-नि-वर्ज्या स्यान्न्यासांशधैवता स्मृता॥३८३॥

पधससनिधपममगरिस । सरिगसरिसरिसा । निधधससरिसरिमसरिगसरिसरिसस निधासनिधधससरिसरिपामगरिसरिगमरिसस्मनिधधस ॥

इति नारायणी । प्रातःकालीया । २४ ।

मस्तु तीव्रतरो यस्मिन्ग-नी तीव्रौ रि-धौ मतौ ।
कोमलौ न्यासधोपेते विभासे गादिमूर्छने ।

आरोहे म-नि-वर्ज्यत्वं ग-पांशस्वरसंयुते ॥ २८४ ॥

गपधसरिगपामगारिससनिधपधससनिधनिधपगपमगारिस-सरिसरिससनिधपधससनिधनिधपगपमगारिससरिससनि-धपधापमापापाध मासनिधपधाधापपमागमारिस । सरिस-सनि धपधससारिरिसापमागारिसा ॥

इति विभासः । प्रातःकालीयः । २५ ।

तीव्रगान्धारसंपन्ना मध्यमोद्ग्रहधान्तिमा ।

सांशस्वरेण संयुक्ता कानडी सा विराजते ॥ ३८५ ॥

मपधनिसरिगमगरिसनिधनिधनिधपमपधनिसारिसनिसा-निधा । सानिधानिधपमपधनिसरिसनितामगमपामगरिसानि-सनिधामपधनिससा

इति कानडी । तृतीयप्रहरोत्तरम् । २६ ।

रिणा युक्तः कोमलेन मेघनादस्तु षाडवः ।

स-स्वरादिस्वरारब्धो म-वर्ज्योऽपि रि-गांशकः ॥३८६॥

मरिगपधानिससनिधपपगगगरिस । गगगगरिसनिसरिस-निसधनिसारिरिगिरिसा । पगपगरिरिगपपगगगरिसारिसानिस-धनिसधनिसरिसनिसधनिधपधपगगगगरिरिरिरिसानिससा ॥

इति मेघनादः । प्रातःकालीयः । २७ ।

षड्ज-पूर्वा तु तोडी स्याद्यत्रोक्तौ कोमलौ रि-धौ ।

न्यासः स्याद्धैवतस्तस्यां गान्धारांशेन शोभिता ।

मेनारोहे तु प-न्यासा पञ्चमेनोभयोरपि ॥ ३८७ ॥

सरिगमपधानिससनिधपमपमगग गरिस । रिसनिसनिध-धनिसरिगरि सरिसनिसानिधा । गगगम्मगरिगरिसरिनिस-निधसरिगमपधधपमग सगारिसानिसरिरिसनिधाधनिस ।

इति तोडी । प्रथमप्रहरोत्तरम् । २८ ।

छायातोडी तथैव स्यान्नि–पाभ्यां रहिता यदा॥ ३८८

इति छायातोडी । प्रातःकालीया । २९ ।

मार्गतोड्यां प-हीनायां कोमलाख्यौ रि-धौ स्मृतौ ।
स-न्यासौ मध्यमांशः स्यान्मूर्छना तत्र धादिका॥३८९॥

धनिसारिगमधानिसारिसानिसनिधानिधानिधमधनिसारिसानिस-निधनिधम । सरिगमगरिगरिगरिसा । धनिसरिसनिसधनि-सरिसनिसधनिसरिसनि धनिसमसरिगमगरिसरिसनिससा

इति मार्गतोडी । प्रातःकालीया । ३० ।

घण्टारागो ग-पूर्वः स्यादन्तः कोमलधैवतः ३९०

गमपधनिस । रिसनिसनिधपमगमपधपमगमपमगरिसस-रिससनि । ग गगमपधपमगरिससरिसनि । गमपधनिसनि-धपमपमपमगमगरिगरिसानि । पधनिसारिसनिसस्मा ।

इति घण्टारागः । तृतीयप्रहरोत्तरम् । ३१ ।

रि-कोमला ग-तीव्राद्या कोमलीकृतधैवता ।
निना तीव्रेण संयुक्ता वराटी धैवतादिका ।
स-तीव्रतरसंपन्नाऽन्दोलनेन मनोहरा ॥ ३९१ ॥

धाधानीसारिगमापामपमारिस । धधनीसरिगमगरिगरि-स । धनिस रिगरिसनिधममधपमगामापानमगरिसाधधानि-सारिगमगरिसरिसरिस निसरिसनिसनिसनिधधपमपमगरिस । धाधामीसा ।

इति वराटिका । द्वितीयप्रहरोत्तरम् । ३२ ।

अथ शुद्धवराख्यां तु रि-गौ कोमलपूर्वकौ ।
गस्तु तीव्रतरो धः स्यात्कोमलस्तीव्रनि-स्वरः ।
धैवतोद्ग्रहयुक्तायां नि-मौ न्यासांशकौ स्मृतौ ॥३९२॥

धधनिसरिगमपमगरिसनीधपनीसा । रिगगरिसरिसरिग-मगरिसारि ससरिससरिसनिसरिगरिमसरिसारिसानिधानिसध-

निसरिसनिसनि । निधपमधपमपम । गगगरिसनिधधनिधध-
निसस ।

इति शुद्धवराटी । द्वितीयप्रहरोत्तरम् । ३३ ।

रि-धौ च कोमलौ प्रोक्तौ यत्र तीव्रतरश्च मः ।
उद्ग्रहकौ प-धौ स्यातां वराटी तोडिका च सा ३९३

धधनिसगमपधधपमगपमपगगगारिस । गमपधधपगमप-
धनिधनिसरि सनिसनिधनिधपमगमधपधनिधनिसामागरिस-
निधनिसरिमनिसनिधप मगमपमगमगरिसनिधनिससा ॥

इति तोडीवराटी । द्वितीयप्रहरोत्तरम् । ३४ ।

अथ नागवराट्यां तु मस्तु तीव्रतरो भवेत् ।
कोमलो धैवतः प्रोक्तो ग-धावुद्ग्राहकौ स्मृतौ ॥३९४॥

गमपधनिसरिसनिधपमगमपमगगरिस । धधनिसनिसरि-
गरिगनिसनि धपमगमपमगमगमगरिसधनिसरिस । धधनि-
धनिसगरिसनिसनिधप मगमगरिसनिधनिससा ॥

इति नागवराटी । द्वितीयप्रहरोत्तरम् । ३५ ।

पुन्नागाख्यवराट्यां तु निषादस्तीव्रसंज्ञकः ।
मस्तु तीव्रतरः प्रोक्तो ग-धावुद्ग्रहकौ स्मृतौ ॥३९५॥

गमपधनिधनिसरिसनिधपमगमपगरिस । धधनिसरिस-
निधपमगमपम पमगरिस । धधनिसरिसगरिसरिसनिस ।
धनिसरिसनिधपमपपमगरि । सागमपधनिधमगरिस । नि-
सगरिसनिस । धनिसरिसनियसा ॥

इति पुन्नागवराटी । द्वितीयप्रहरोत्तरम् । ३६ ।

म-तीव्रतरसंयुक्ता प्रतापोपपदान्विता ।
वराटी च निना युक्ता तीव्रसंज्ञेन गादिका ॥ ३९६॥

गमपधनिसरिसनिसनिधपमपमगमपमपम्मागरिसानिसग-
रिसरिसनिस । गमपधपमगगरिसनिसनिसगमपधानिसनि-

धपमपमगमपपधम्मागरिस । निसगरिसरिसानिस । ग-मपधपमगगगरिसनिसनिसनिसगमपधनिसरिगरिसनिनिधप-पधधपमगमपगमगरिससरिगमपपधधपमपमगगरिसरिसनि-ससा ।

इति प्रतापवराटी । द्वितीयप्रहरोत्तरम् । ३७ ।

अथ शोकवराट्यां तु रि-गौ कोमलपूर्वकौ ।
मश्च तीव्रतरः प्रोक्तः कोमलो धैवतः स्मृतः ।
न्यासांशौ च स-नी यत्र मूर्छना च प-पूर्विका ॥ ३९७ ॥

पधनिसरिगमपधपमगरिसनीसा । सरिगमपधनिसनि-धपमगगरिरिगरिमरिसनिधनिधनिसारिसानिस । सरिगरिस-निसनिरिगनिरिसरिरिसानिमधनिनिसनिस । गरिसरिसानि-स । सरिगमपमगरिसरिसरिसनिधधनिसरिसानिससा ॥

इति शोकवराटी । द्वितीयप्रहरोत्तरम् । ३८ ।

कल्याणोपपदा या सा वराटी गादिमूर्छना ।
कल्याणमेलसंभूता म-पांशन्यासका स्मृता ॥ ३९८ ॥

गमपधनिसरिगरिगारिसनिधपधनिसनीसा । नीधापामा-पमापपमगगमपमगगारिस । नीधधनीसा । सरिगमपमधप-ममपपमगममगारिसनीधधनीसरिसनीसगरिसधनीसधनीसस-रिसनीससा ॥

इति कल्याणवराटी । तृतीयप्रहरोत्तरम् । ३९ ।

खम्बावती[1] प-हीना स्यात्कोमलीकृतधैवता ।
गान्धरमूर्छनायुक्ता रिणा त्यक्तावरोहिका ॥ ३९९ ॥

गमधनिसरिसानिधगगमगसा । गमधानिधमधानिसरिसनि-सनिधमग गमगगारिस।निनिससगगमगमनिधमगगमगगारि-स । रिरिसानिनिस सा ।

---

१ खम्भाव° ।

इति खम्बावती । तृतीयप्रहरोत्तरम् । ४० ।

ध-कोमला नि–तीव्राद्या षड्जपूर्वकमूर्छना ।
ध-गयोः कम्पसंयुक्ता स-पांशाऽऽभीरिका मता ।
आरोहणेऽवरोहेऽपि कचिन्मध्यमवर्जिता ॥ ४०० ॥

सरिगममपधनिससा । निधापधधधपममपामपमगारोरि-सनीस । ( कम्पापन्यासत्वं सर्वत्रापि । ) पनिसगगारिसरि-रिसनिसगमपधसप गारीसनीससससपप्पमगरीसनिससस । सरिगमपामपनिधापधधपमप मगारीसरिरिसनिसस्मसरिगम-पधधपमपमगारिसरिसनिससा ॥

इत्याभीरिका । तृतीयप्रहरोत्तरम् । ४१ ।

मस्तु तीव्रतरो यस्मिन्ग-नी तीव्राविती‌रितौ ।
गान्धारोद्ग्रहकल्याणे नाऽऽरोहे तिष्ठतो म-नी ४०१

गपधसरिगरिसनिधपधनिधधपपमगगपममगगरिसरिगस-रिगगससनि धपपधधपगपमगपमगगारिस । सससनिधपग-पमगपमगगारिस । सससनिधपगपधसरिगपमगगारि स । सरिगपपगधसनरिगरिससनिधपसानिधपधमगगपममगारिससा निधपधससा ॥

इति कल्याणः । तृतीयप्रहरोत्तरम् । ४२ ।

रि-कोमला ग-तीव्रा या म-तीव्रतरसंयुता ।
ध-कोमला नि तीव्रा च ख्याता रामकरीति सा ।
आरोहे ग-निवर्ज्या स्यात्पांशा धैवतमूर्छना ॥ ४०२ ॥

धमरिगपमगारिससरिगपगपपधसगरिससनिधपधापमाग-गपमगगारि मसनिधपगपधससरिसरिगपपमगगारिससारिगपा-धधपगपपगपगगारि मासरिरिसरिगसारिगपगपधसगरिसस-निधपधापमगारिस । सरिसरि ससा॥

---

२ खम्भाव० ।

इति रामकरी । प्रातःकालीया । ४३ ।

अतितीव्रतमो गः स्यान्मस्तु तीव्रतरो मतः ।
धस्तु तीव्रतरो निः स्यात्तीव्रः षड्जादिमूर्छने ।
स-न्यासे मध्यमांशे च रागे सारङ्गसंज्ञके ॥ ४०३ ॥

सरिगमपधनिस । सनिधपमगरिसा । सरिगमपपधपपम-
गमपमगमग रिस । सरिगरिसा

इतिसारङ्गः । द्वितीयप्रहरोत्तरम् । ४४ ।

रि-धौ तु कोमलौ यत्र ग-नी तीव्रौ च मालवे ।
षड्जावरोहणोद्ग्राहे स-रि-न्यासांशशोभिते ॥ ४०४ ॥

सासनिधपधनीधपमपपमगारिस । ( न्यपकर्षणम् । )
ससपाधनीधपमपपमगमारिपामपागमारिरिरिरिरिरिरीस । पम-
गसरिपसरिगमपधनीधपमपपमगमपमगसारिरिरिसाधनीधप-
मपपममगमासपापागमारिरिसनीसानीलानीधपमपगमापमग-
मारिरिसनीससा ॥

इति मालवः । तृतीयप्रहरोत्तरम् । ४५ ।

रि-ध-कोमलसंयुक्ता ग-नि-वर्जा गुणक्रिया ।
धैवतोद्ग्राहसंयुक्ता क्वचिद्गान्धारसंयुता ॥ ४०५ ॥

धससाधपमपा । पममारिसा । सधधपमपपममारिस । स-
रिगगगमगरिस । धरिससससधससससधपममममारिस । ध-
रिरिरिरिसधससधपमपाधमारिस । सरिगमगरिसा । साधप-
मपममामामससारिसा । ममरिसमापाममारिसरिरिरिससा ॥

इति गुणकरी । प्रथमप्रहरोत्तरम् । ४६ ।

पञ्चमोद्ग्राहसंपन्ने ध-हीने ककुभे पुनः ।
तीव्रगान्धारराहित्यमारोहे चावदन्बुधाः ॥ ४०६ ॥

पनिसरिमागारिस । पनिसरिसरिनिसपपनिसरिमपमपनि-
पमपमागरिगरिस । पनिसरिमनिसरिममपपनिनिसरिमागरि-

मपमागरिगरिस । निसरिसारिमारिसनिपमपनिस । निसरि-
मरिसमरिसनिस । पपनिपमरिमरिमपमरिमरिमारिगरिसापनि-
सरिगरिसस । निसरिगरिसनिसमा ॥

इति ककुभः । प्रातःकालीयः । ४७ ।

शंकराभरणे प्रोक्तौ ग-नी तीव्रौ तु सादिमे ।
ग-न्यासे मध्यमांशे च ढालूकम्पसुशोभिते ॥ ४०७ ॥
सरिगमपधनिसरिगमपमगरिससनिधपधनिससनिमपमग-
रिगमपमगरिससनिधपधनिस ॥

इति शंकराभरणः । प्रातःकालीयः । ४८ ।

वडहंसः सदा ज्ञेयः शंकराभरणस्वरैः ।
षड्जादिः पञ्चमांशः स्यान्न्यासोऽपि पञ्चमस्वरः ।
अवरोहे ग-हीनः स्यादारोहे तु ध-वर्जितः ॥ ४०८ ॥
सरिगमपनिससनिधपमरिगमारिस सससनिधपपनिसरिग-
मपमसारिगमपधपमपधपमपमारिपम । रिगमरिसरिसमनिधप-
ममपममप । पपमरिगमरिससरिगमपासरिपारिपाधपममधप-
मपमरिदमरिगमरिस।रिससनिधपमयमयमप ।पपमरिगमारिस
सरिगमपधपममरिगमारिस । पमपमपमरिगमरिसरिसरिसनि-
ससा ॥

इति वडहंसः । तृतीयप्रहरोत्तरम् । ४९ ।

वेलावल्यां ग-नी तीव्रौ मूर्छना चाभिरुद्गता ।
आरोहे म-नि-हीनायामंशः षड्जो बुधैः स्मृतः ।
अवरोहे ग-वर्जायां क्वचिद्गान्धारमूर्छना ॥ ४०९ ॥
गमपधसरिसनिधपध । मपरिगमारिसा । सरिगमपधप-
मगपरिगमारिस । सरिधपगरिगमारिमागपधससानिधपधपम-
रिगमरिस । रिगपमरिगमरिस । सरिगपधपसनिधपधधपम-

रिगमरिस ( सधपमरिगमरिस । रिंगरिसनिधपधपरिगपारि-
स ) ॥

इति वेलावली । प्रातःकालीया । ५० ।

ग-नी-तीव्रौ तु केदार्यां रि-धौ न स्तोऽथ गादिमा॥४१०॥

गमपनिसगमगसानिपनिस । गपगसनिपममगसगमपमग-
स । गमपनिपममसनिसनिसनिसनिमपनिपमगमपमगसनिस-
सा ॥

इति केदारी । तृतीयप्रहरोत्तरम् । ५१ ।

काम्बोधी तीव्रगान्धारा गन्धारादिकमूर्छना ।
आरोहे म-नि-हीना स्यान्म-धांशस्वरभूषिता ।
यदा गान्धारहीना स्यान्मूर्छना चोत्तरायता ॥ ४११ ॥

गपधससनिधसधस । धसरिममगरिस । धसरिमगरिसस-
रिगगरिगरिस । सनिधपधापमगपधसारिसनिधपधपमगगप-
धसरिगरिसरिमगरिससरिससनिधपधपमगरिगरिस । सनि-
धपधस ॥

इति काम्बोधी । द्वितीयप्रहरोत्तरम् । ५२ ।

धैवतोद्ग्राहसंयुक्ता गोपीकाम्बोधिका पुनः ।
यत्राऽऽरोहे नि वर्ज्यत्वं म-पांशाभ्यां सुशोभिता॥४१२॥

धमसरिगम । पधपमपमपमामरिगरिगरिस । सरिगमपा-
सापामपा । मपयोःकम्पनान्निधधपामपासरिसरिसरिगरिगरिग-
मगरिगमपानिधपमपमा । रिगारिसगरिसरिममरिगमपधनिध-
पममागरिगरिसा । धमरिगमगरिगरिगरिस । पमगरिगरिस-
सरिसनिधधससा ॥

इति गोपीकाम्बोधी । द्वितीयप्रहरोत्तरम् । ५३ ।

आरोहे म-नि-वर्ज्यः स्याद्दीपको मालवोत्थितः ।
गान्धारोद्ग्राहसंयुक्तः संन्यासांशविभूषितः ॥ ४१३ ॥

ग प ध स ग रि स स स नि ध प धा प म गा रि स स
रि स रि स रि ग प ध नि ध धा प मा ग गा रि स ।
स रि स स ध स स रि ग म प ग रि स म रि ग ग प
ध स स नि ध धा प मा मि विकर्षणम् ग गा रि स
रि रि स स नि ध प प ध स स स रि स ग ग प ग प ग
प ध स स रि ग प म मा री गा गा रि स रि स स नि ध
प ध नि ध प प म ग ग प म ग रि रि स सा ॥

**इति दीपकः । द्वितीयप्रहरोत्तरम् । ५४ ।**

पञ्चमांशग्रहन्यासा सा ( मा ) ल्वस्वरसंभवा ॥
अवरोहे गवर्ज्याऽपि सादिमा(?)पठमञ्जरी ॥४१४॥

सरिग मपमा पगम पमरि सासरि गमप मपप धनि ध
नि सरिसनि ससरसा ॥

**इति पठमञ्जरी । तृतीयप्रहरोत्तरम् । ५५ ।**

या गौरीरागसंभूता ललिता पञ्चमोज्झिता ।
सांशोद्ग्राहा तथा मान्ता गीतान्ते सा सुशोभना ॥४१५॥

सरिगमधनिससनिधम गरिसरिसनिसनिसनिधनिनिसग-
गमगरिसनिसधनिसनिसनिनिधमधनिसरिगमगरिसनिधनिधम
मगरिसरिसनिसमधनिसमागरिसानिससा ॥

**इति ललिता । सर्वदा । ५६ ।**

गौरीमिलसमुद्भूता बहुला मध्यमोज्झिता ।
सवियोगि-निना युक्ता गान्धारोद्ग्राहपांशका ॥ ४१६ ॥

गपधसधनिधपगपागारिगारिस । रिरिसधधसरिरिगमगरिसग
पधनिधपगमगारिसरिरिसधधससा ॥

**इति बहुला । प्रथमप्रहरोत्तरम् । ५७ ।**

**गुर्जरी** मालवोत्पन्नाऽवरोहे म—नि—वर्जिता ।
ग-श्लिष्टमध्यमोपेता धैवतश्लिष्टस-स्वरा ।

गान्धारमूर्छ्नोपेता दाक्षिणात्या प्रकीर्तिता ॥ ४१७ ॥

गपधसरिगरिसधनिधपधपधपपधमगरिस्म । रिरिसधधस गपप । गपधधापगारिसरिरसधधमधनिधपधधपगपपागमाग-रिसरिरिसधधससा ॥

**इति दाक्षिणा गुर्जरी । प्रथमप्रहरोत्तरम् । ५८ ।**

**औत्तरा गुर्जरी** ज्ञेया शुद्ध—गा पूर्ववत्सदा ॥ ४१८ ॥

**इत्यौत्तरा गुर्जरी । प्रथमप्रहरोत्तरम् । ५९ ।**

गौरीमेलसमुद्भूता धैवतोद्ग्राहशोभिता ।

धन्यासांशाऽपि **कौमारी** प्रायशः कम्पितस्वरा॥४१९॥

धनिसरिगमगरिसनिध । धनिसरिस । गमपधनिधपध-निधपगमपमप गमगरिसन्निसधनिधनीससा ॥

**इति कौमारी । प्रथमप्रहरोत्तरम् । ६० ।**

गौरीमेलसमुद्भूता षड्जोद्ग्राहेण मण्डिता ।

म-नि-त्यक्ता सदा **रेवा** ग-पादियमलस्वरा ॥ ४२० ॥

सरिगपधससरिगरिससससधपगपगारिससरिगपधसधसरि-गपगरिसरिरिससधससा ॥

**इति रेवा । तृतीयप्रहरोत्तरम् । ६१ ।**

**गौलस्तु** ग-ध-वर्ज्यः स्याद्गौरीमेलसमुद्भवः ॥ ४२१ ॥

सरिमपनिसरिससससनिपपपमारिरिमिरिपस । पमपमपम-रिरिरसरि सरिसनीससा ॥

**इति गौलः । तृतीयप्रहरोत्तरम् । ६२ ।**

अथ **केदारगौलः** स्यात्तीव्रगान्धारसंयुतः ।

रजनीमूर्छ्नायुक्तो रि-प-योगेन मण्डितः ॥ ४२२ ॥

तथैव म-प-योगेन पञ्चमांशेन शोभितः ।

आरोहे ग-ध-वर्ज्यः स्याद्रि-स्वरांशः क्वचिन्मतः॥४२३॥

निसरिमपनिधधापमगारिरिपमगरिगरिम । निसरिमपसा-

निधपमपधा पमगरिरिरिगरिसनिसरिपमगरिगरिसनिससा ॥

इति केदारगौलः । तृतीयप्रहरोत्तरम् । ६३ ।

अथ कर्णाटगौलः स्याद्रि–तीव्रतरसंयुतः ।
तीव्रगान्धारसंयुक्तो ग म-न्यासांशशोभितः ॥ ४२४ ॥
षड्जादिमूर्च्छनोपेतः पा(?)पन्यासावरोहकः ।
आरोहे धैवतेनापि क्वचिद्वर्ज्यः सतां मतः ॥ ४२५ ॥

सरिगमपधनिसरीसनीससा । निधपमनिनिसरीसनिनी ससा ॥

इति कर्णाटगौलः । तृतीयप्रहरोत्तरम् । ६४ ।

सारङ्गगौल आख्यातः सारङ्गस्वरसंभवः ।
स-न्यासो मध्यमांशश्च ग-ध-हीनोऽथ सादिमः ४२६

सरिमपनीसारिसनीसनिपमपमरिमारिसा । निसनिसनिसनिपमानिप मपपनीसरिमपमरिमरिसनीससा ॥

इति सारङ्गगौलः । तृतीयप्रहरोत्तरम् । ६५ ।

रीतीगौलस्तु संपूर्णो धैवतादिकमूर्च्छनः ।
अवरोहे प-वर्ज्यः स्यान्न्यासांशस-रि-भूषितः ॥ ४२७ ॥

धनिसरिगामपधनीनिधपमपगगारिसानिस । धनिसरिगमपपधनिधपस गगरिसनिससा ॥

इति रीतिगौलः । तृतीयप्रहरोत्तरम् । ६६ ।

अथ नारायणे गौले तीव्रगान्धारसंयुते ।
अवरोहे ध-गौ न स्तो निर्योरन्यतरादिमे ॥ ४२८ ॥
पुनः स्वस्थानगमक आरोहे रि-पयोर्मतः ।
पूर्वोत्तराहतोपेते मध्यमन्यासमण्डिते ॥ ४२९ ॥

निसरिगारिसारिमपपधपमपमारिगारिस । निसनिपमपपरिगरिस । रिमपमपमरिरिगरिस । निसानिसरिमरिमपधपमपमरिमरिगरिसनि मनिस ॥

इति नारायणगौलः । तृतीयप्रहरोत्तरम् । ६७ ।

अथ मालवगौलेऽस्मिन्गौरीस्वरसमुद्भवे ।
त्यक्त-धे रि-स्वरोद्ग्राहे न ह्यारोहे तु ग-स्वरः ।
आरोहे यदि गान्धारः पादिर्मान्तो विधीयते ॥ ४३० ॥

रिमपनिससनिपपमगगरिमगरिस । रिमपनिपनिसरिस-रिमारिगगगा रिस । सनिपगपमगसरिमगरिसा ॥

इति मालवगौलः । तृतीयप्रहरोत्तरम् । ६८ ।

ग-नी त्याज्यावथाऽऽरोहे रि धौ यत्र च कोमलौ ।
षड्जादिस्वरसंभूतिर्देश्यामंशस्तु रि-स्मृतः ॥ ४३१ ॥

सरिमपधसनिनिधमपगगरिस । रिरिसनीधसा । सरिम-पनिनिधमप मपगगरिसरिमपपमगारिरिगारिस । धधस ॥

इति देशी । सर्वदा । ६९ ।

हिन्दोलेऽथ रि-पौ त्याज्यौ कोमलो धैवतो भवेत् ४३२

मगसधनिस । सनिधमगमगससगमधमधनिस । सगम-निसनिधमगमग सनिससा ॥

इति हिन्दोलः । द्वितीयप्रहरोत्तरम् । ७० ।

हिन्दोलो रि-पयोगेन मार्गहिन्दोलको भवेत् ॥४३३॥

इति मार्गहिन्दोलः । द्वितीयप्रहरोत्तरम् । ७१ ।

रि-धौ तु कोमलौ ज्ञेयावाभीरीमूर्छनायुते ।
आरोहे च ध-र्ज्यत्वं रागे ढक्काभिधानके ॥ ४३४ ॥

मरिगमपनिससनिधपनिधपधपमपधपममारिस । सरिग-मपनिधधपगा रिस । ( ये कम्पनं सर्वत्र । ) पगारिसनि-धपपधसरिगमपागारिसरिस ॥

इति ढक्कः । तृतीयप्रहरोत्तरम् । ७२ ।

रिस्तु तीव्रतरो यस्मिन्गान्धारस्तीव्रसंज्ञकः ।
धस्तु तीव्रतरः प्रोक्तो निषादस्तीव्रनामकः ।

अवरोहे ध-गौ न स्तो नाटे रि-स्वरमूर्छना ॥ ४३१ ॥
रिगमपधनिससनिपममपममरोसारिगमरिगमपधनिसधनि
ससानिप सनिपममपममपममपममरिस । रिसनीससा ॥

इति नाटः । तृतीयप्रहरोत्तरम् ७३ ।

वेलावलीसमुद्भूतो मांशो रि-न्यासको नटः ।
अवरोहे ग-हीनः स्याद्गान्धारादिकमूर्छनः ॥ ४३६ ॥
गमपधनिससनिधपममपममम । रिगमारिसधनिसधनि ।
ससानिपस । ( निषाद-तारषड्जयो टालुः । ) सनिसनिस-
निधपधनिससानिप । ( सर्वत्र विकर्षणम् । ) धनीधपममप-
मममरिगमारिस ॥

इति नटनारायणः । तृतीयप्रहरोत्तरम् । ७४ ।

शंकराभरणोत्पन्ने गान्धारस्वरवर्जिते ।
अथ सालङ्गनाटेऽस्मिन्संन्यासांशसमन्विते ।
षड्जोद्ग्राहेण संपन्ने म-धावाम्रेडितौ स्मृतौ ॥ ४३७ ॥
ससरिममपधधपमतपममरिससाधपमपधससारिरिस । रि-
ममपधनीधप मममममरिससाधपमपधससरिसा ॥

इति सालङ्गनाटः । तृतीयप्रहरोत्तरम् । ७५ ।

छायानाटस्तु विज्ञेयः शंकराभरणस्वरैः ।
आरोहणे नि-वर्ज्यः स्यादवरोहे ग-वर्जितः ।
धैवतोद्ग्राहसंयुक्तो रि-न्यासोऽनेकमध्यमः ॥ ४३८ ॥
धससरिगमपधसानिधपममरिधपमपममममरिधापाममरि-
सरिसारिसस ॥

इति छायानाटः । तृतीयप्रहरोत्तरम् । ७६ ।

अथ कामोदनाटेऽस्मिंस्तीव्रगान्धारसंयुते ।
धैवतोद्ग्राहसंपन्नेऽवरोहे ग-ध-वर्जिते ।
स-न्यासो मध्यमांशः स्यात्सर्वत्र बहुकम्पनम् ॥४३९॥

धनिसरिगमपधनिससनिपसनिपममपममरिस । ससपाम-
मरिधधनि सधनिसरिगमपममरिसरिसनिपमपधनिससानिपस-
सनिपनिपममपमम रिस । ससपाममरिसधनिसरिगमपमम-
सरिसनिपमपधनिसममारि सधनिसधनिससा ॥

इति कामोदनाटः । तृतीयप्रहरोत्तरम् । ७७ ।

आभीरीमेलसंभूतोऽवरोहे ध-स्वरोज्झितः ।
अथ न्यासविशेषाढ्य आभीरीनाटकः स्मृतः ।
स-स्वरादिग्रहन्यासो यस्मिन्नंशौ ग-नी स्वरौ ॥ ४४० ॥

सरिगमपधनिससनिपममपमगाउरिसानीउससा । पा-
मसपममपपध निसनिपससरिससनिपनिपमपममपपससारिस-
रिसनीससा ॥

इत्याभीरीनाटः । तृतीयप्रहरोत्तरम् । ७८ ।

कल्याणमेलसंभूतोऽवरोहे ग-ध-वर्जितः ।
षड्जादिमूर्छनोपेतो रागः कल्याणनाटकः ॥ ४४१ ॥

सरिगमपधनिससनिपमपमममममरिमामारिसरिसनीससा।
पामसरिगामारिसारिसनीससा ॥

इति कल्याणनाटः । तृतीयप्रहरोत्तरम् । ७९ ।

अथ केदारनाटेऽस्मिन्नारोहे रि-ध-वर्जिते ।
मादिमे च ग-नी तीव्रावावरोहे ध गोज्झिते ॥ ४४२ ॥

गमपनीसनिपममरिसारिसनीससा । पनिसपनीनिपममरि-
मरिसनीस सा । पनिसपनीससमरिस । गमपनिससममपम-
मसरिगमारिससनिस । ससगमरिममरिसारिसनीससा ॥

इति केदारनाटः । तृतीयप्रहरोत्तरम् । ८० ।

वराटीस्वरसंजाते वराटीनाटके पुनः ।
अवरोहे ध-गौ वर्ज्यौ न्यासांशौ षड्जपञ्चमौ ।
धैवतोद्ग्राहसंपन्ने नि-मयोः कम्पनं भवेत् ॥ ४४३ ॥

धनिसरिगमपसरिपमपमपममरिपममा । सनीससा ॥

इति त्रैराटीनाटः । तृतीयप्रहरोत्तरम् । ८१ ।

इति नव नाटाः ॥

गौरीमेलसमुत्पन्नाऽरोहणे ग-नि-वर्जिता ।
मध्यमोद्ग्रहधांशाद्याऽसावरी न्यासपञ्चमा ॥ ४४४ ॥

मपधसरिमपमगरिसधसरिगारिसधरिधपमपमगरिमपमप. रिरिगरिस रिरिमागरिसा ॥

इत्यसावरी । द्वितीयप्रहरोत्तरम् । ८२ ।

सावेरी तीव्रगान्धारा धैवतोद्ग्रहसंभवा ।
मध्यमांशा नि-हीना चाऽऽरोहणे ग-नि-वर्जिता॥४४५॥

धसरिममगरिसरिगरिसाधधसरिममापधधपमागरि । सरिगरिरिससा धधससरिरिममपधधपमपमामरिस । सरिगरि-रिससाधधमसरिरिमम पधधपमपमासरिस । सरिगरिरि-ससाध ॥

इति सावेरी । सर्वदा । ८३ ।

गान्धारोद्ग्राहसालङ्गे रि-गौ कोमल-तीव्रकौ ।
ध-न्यासो मध्यमांशश्च सर्वत्र बहुकम्पनम् ॥ ४४६ ॥

गमपधनिधपनीधपमपमागरीसनीधधनिसरीसनीधगमपागरि-सानिधध नीसा । मागरीसनीधधनीससा ॥

इति सालङ्गः । सर्वदा । ८४ ।

रि-त्रयोद्ग्राहसंयुक्तः षड्जोद्ग्राहोऽथवा मतः ।
श्रीरागस्तीव्रगान्धार आरोहे ग-ध-वर्जितः ॥ ४४७ ॥

रिरिरिपमगरिगारिससासानिसानिधपसपनिस । निसारिम-मपपनिनि सरिगरिसनिसनिसनिधपमपममामगरिरिगरिरिग-रिसनिनिससा ॥

इति श्रीरागः । तृतीयप्रहरोत्तरम् । ८५ ।

गौर्युत्पन्ना पहाडी स्याद्गान्धारस्वरवर्जिता ।
उद्ग्राहे षड्जसंपन्ना न्यासांशायो(?)रि-शोभिता ४४८
सरिमपधपपमपमरिमरिसरिरिसनीस । रिसपधपमपपम-
रिसरिरि सनीससा ॥

इति पहाडी । तृतीयप्रहरोत्तरम् । ८६ ।

विहंगडे ग-नी तीव्रावरोहे तु रि-वर्जिते ।
गान्धारोद्ग्राहसंपन्ने न्याशांशो रि-स्वरो मतः ॥४४९॥
यद्यस्मिन्पञ्चमोद्ग्राहः स्यादारोहे ग-वर्जनम् ।
मूर्छना मध्यमे चापि प-राहित्यं सदा भवेत् ॥ ४५० ॥
गमपनिसगरिसनिपमगमपमगरिसनीस । पनिसमगारि-
सनीस । गम पनीसानीपमगारिसनिसरिसनिसा । पनिसा-
रिसमगारिसानिपनिसरिसनीससा ॥

इति विहङ्गडः । तृतीयप्रहरोत्तरम् । ८७ ।

गौरीमेलसमुत्पन्ना षड्जोद्ग्राहसमन्विता ।
न्यासांश-ग-स्वरोपेता पूर्वी सा सुखदायिनी ॥ ४५१ ॥
सरिगमपधनिससनिधपधमपपगगरिगागमपपमगरिस ।
( तानसमाप्तौ गे विकर्षणम् ) सरिसरिससधपस । स-
निधपधपधम गरिगा ( विकर्षणम् । ) रिससरिगमपधपग-
रिगा रिसगमपमगरिगा ( विकर्षणम् ) रिधपसा ॥

इति पूर्वी । तृतीयप्रहरोत्तरम् । ८८ ।

कोमलौ च रि-धौ यत्र ग-नी यत्र च तीव्रकौ ।
मश्च तीव्रतरः प्रोक्तः पूर्वीसारङ्गके पुनः ।
ऋषभोद्ग्राहसंपन्ने ग-पौ न्यासांशकौ मतौ ॥ ४५२ ॥
रिगमपधनिससनिधपमपपमगमगारिगगासनीससा। (ता-
न-समाप्तौ गे विकर्षणम्।) पपमधपमपपमगरिगसारिसनिससा॥

इति पूर्वीसारङ्गः । तृतीयप्रहरोत्तरम् । ८९ ।

रिस्तु तीव्रतरः प्रोक्तस्तीव्रगान्धारशोभिते ।
सामान्तसंज्ञके रागे न्यासोद्ग्राहांशषड्जके ॥४५३॥
सरिगमपधनिससनिधपमपमगरिगरिस । ससरिगमपमप
पमरिगमगरिमसरिगमपधनिसरिगमपममगनिसस । निधप
मममगरीसरीसनीससा ॥

इति सामन्तः । तृतीयप्रहरोत्तरम् । ९० ।

धैवतोद्ग्राहधांशान्तो गौरीमेलसमुद्भवः ।
रागो मङ्गलकोशाख्यो ध-नी यत्र समन्वितौ ॥४५४॥
धनिसरिगमपध पमपपमगरिसरिगमगारिसारिसानिधसनिध
धनिसरिसनिधधधनीससा । गमपमगारिसरिसनिधसाधनीस॥

इति मङ्गलकोशकः । सर्वदा । ८१ ।

नादरामक्रिया गौरीमेलोत्पन्ना म-भूषिता ।
षड्जोद्ग्राहा च नि-न्यासारोहे गान्धारवर्जिता ॥ ४५५ ॥
ससससरिगमम्मागमपधनिधधपमपमपममस । सरिमस ।
गमगमपमगरिसरिनिससनिधपमपमगमपमगमगरिसरिसनि ।
सरिसम्मगरिसारिसनिसरिममगरिसरिस निसरिममगमपधनि
धपधपमपमगभगरिसरिसनी । सरिमागरिसरिस ॥

इति नादरामक्रिया । प्रथमप्रहरोत्तरम् । ९२ ।

कुडाइ तीव्र-गोपेता चाऽरोहे-म-नि-वर्जिता ।
गान्धारोद्ग्राहसंयुक्ता पञ्चमांशेन शोभिता ॥ ४५६ ॥
ध-र्योरन्यतरेणैव यत्रावरोहणं मतम् ।
गान्धारेण विहीना साऽप्यवरोहे क्वचिन्मता ॥ ४५७ ॥
गपधसरिसनिपसगरिगमारिससरिगपमगधपमगरिगमारि
सगपगपधनिपसधपमगरिगगारिसा ॥

इति कुडाइ । प्रथमप्रहरोत्तरम् । ९३ ।

१ कडायी । २ कुडायी ।

तीव्रगान्धारसंयुक्त आरोहे वर्जितो ग-नी ।
षड्जोद्ग्राहेण संपन्ने गौण्ड आम्रेडितस्वरैः ॥ ४५८ ॥
सारिममपपधधसनिधधपमपमागरिसरिस । सारिमपमाग
रिसरिरिसधसधसनिधधपमपमागरिसरिस । सारिमपमागरिस
रिरिसधसधसरि । मपममगरिसरिरिससधस ॥

इति गौण्डः । सर्वदा । ९४ ।

अवरोहे ध-गौन स्तो मस्तु तीव्रतरो भवेत् ।
देवगिरौ ग-नी तीव्रौ यत्र स्यात्षड्जमूर्छना ॥ ४५९॥
सरिगमपधनिससनिपमरिस । धनिसधनिसरिगमपधपमप
मरिमरिससरिगमपधनिसरिगमपपमरिस । धनिससधनिसरिस
नीसा ॥

इति देवगिरिः । द्वितीयप्रहरोत्तरम् । ९५ ।

तदा तु देवगान्धारी पूर्णश्चेद्भैरवो यदा ।
गान्धारादिस्वरोद्ग्राहा स-स्वरांशेन शोभिता ।
सा यदा रि-स्वरोद्ग्राहा तदाऽऽरोहे ग-वर्जिता ॥ ४६०
गमपधनिधधपमागरीनिधनीससस्मानिनिधनीसा। निधधप-
मगरीसानिध नीसा ॥

इति देवगान्धारी । द्विरीयप्रहरोत्तरम् । ९६ ।

गौरीमेलसमुत्पन्ना त्रिवणी म-स्वरोज्झिता ।
अवरोहणवेलायां षड्जोहांश-रि-स्वरा ॥ ४६१ ॥
सरिगमपधनिससनिधपगरिगरिसनीसा । सरिगमपापग-
रिगपगरिग रिसरिस । गमपगरिसासरिगमगरिसरिसनीससा

इति त्रिवणी । तृतीयप्रहरोत्तरम् । ९७ ।

रिस्तु तीव्रतरः प्रोक्तो मस्तु तीव्रतरो भवेत् ।
अतितीव्रतमो गः स्यान्निस्तीव्रः स्यात्कुरङ्गके ।
षड्जोद्ग्राहेण संपन्ने न्यासांशौ षडजपञ्चमौ ॥ ४६२॥

सरिगमपधनिससनिधपमपामपमगरिगरीस । ससरिगम-पधपमपपमग मगरीससरिगमपप्पमगमपगरिसनीससा ॥

इति कुरङ्गः । तृतीयप्रहरोत्तरम् । ९८ ।

रि-धौ च कोमलौ ख्यातावतितीव्रतमश्च गः ।
मश्च तीव्रतरो यत्र निषादस्तीव्रसंज्ञकः ।
सौदामिन्यां तु गान्धार-स्वरोद्ग्राहः सतां मतः ४६३

गमपधनिसरिसनिसनिधपमपापमगमगरिसा । सरिगम-पमपमगरिसस रिगमगरिसासरिसनिससमा । गमपपमपाग-मपमागरिसानीससा ।

इति सौदामिनी । तृतीयप्रहरोत्तरम् । ९९ ।

षट्श्रुतिर्मध्यमो यत्र धैवतः कोमलो भवेत् ।
निषादस्तीव्र आख्यातो वैजयन्ती रि-पूर्विका ।
आरोहणेऽवरोहे च कादाचित्कौ ग-धौ मतौ ॥ ४६४ ॥

रिमपनिससनिपमपमरिगरिस । रिमपनिधपमपमरिगरि-स । निसरि मपमगरिसनिसरिसनिधपमपनिससा ॥

इति वैजयन्ती । द्वितीयप्रहरोत्तरम् । १०० ।

ग-नि-भ्यां वर्जितो हंसो रि-ध-कोमलसंयुतः ॥ ४६५ ॥

सरिमपधधपमरिरिमपपमरिरिमरिसरिसधससम । सरिम-पमपधसस धमपमारिसरिससधसस ॥

इति हंसः । द्वितीयप्रहरोत्तरम् । १०१ ।

कल्याणमेलसंभूतो रागः कोकिलसंज्ञकः ।
सर्वदा म-नि-हीनः स्याद्गान्धारादिकमूर्छनः ॥ ४६६ ॥

गपधससाधपगपगारिसिरिसासरिगपधसागारिसरिधसधप-गपगारिसा । सरिसरिगपागारिसरिगरिधससधससरिगपग-रिसरिसधसस ॥

इति कोकिलः । तृतीयप्रहरोत्तरम् । १०२ ।

कोमलाख्यौ रि-धौ यत्र ग-नी च तीव्रसंज्ञितौ ।
मस्तीव्रतरसंज्ञः स्याज्जयश्रीनामके पुनः ।
आरोहणे रि-धौ न स्तो नि-स्वरोद्ग्राहमण्डिते॥४६७॥

निसगरिगमपनिधपमगमगरिसनिसगरिसनीसगारि । गमपमपमगरि सनीसापनीसागमपनीसा।रिसानिसनिधपमगामपमगरिस नीनीसगारि रिसनीसस ॥

**इति जयश्रीः । प्रथमप्रहरोत्तरम् । १०३ ।**

गौरीमेलसमुद्भूतो धैवतस्वरवर्जितः ।
आरोहणे रि-हीनः स्यान्निषादादिः सुरालयः॥४६८॥

नीसगमपनीसनिपमगारिसानिस । नीसगमगमगरिसनिस। नीसगमपप मगरिसरिसनिसपनीसगमपमगरिसरिसनिसनिपमपनीसगमपमगरिस रिरिसनिस ॥

**इति सुरालयः । तृतीयप्रहरोत्तरम् । १०४ ।**

गौरीमेलसमुद्भूत आरोहे म-नि-वर्जितः ।
ग-ध-हीनोवरोहः स्याद्रादिरर्जुनसंज्ञकः ॥ ४६९ ॥

गपधससनिपमरिमगपपधधममधसरिगधमरिस । रिरिरिरिगमरिमम रिसरिसरिसनिपपधनिपममपममरिगमरिसरिसधससरिसधससससारिस सरिगमरिसरिसधसस ॥

**इत्यर्जुनः । द्वितीयप्रहरोत्तरम् । १०५ ।**

कल्याणमेलसंभूतो ध-हीनः पञ्चमं गतः ।
ऐरावतो ग-पूर्वोक्तो न्यासषड्जविभूषितः ॥ ४७० ॥

गमपानिसरिसनिपमगमपगमगारिगपानिसरिसनीस । गमपमगरिस नीस । गमपमपममगमपमपसागरि । सरिसानिसप निसरिसमगरि निसपनीसस ॥

**इत्यैरावतः । द्वितीयप्रहरोत्तरम् । १०६ ।**

---

१ °हीनोऽव° ।

शंकराभरणे मेले रागः कङ्कणसंज्ञकः ।
प-हीनो गादिराख्यातो बहुमध्यमसङ्गतः ॥ ४७१ ॥

गमनिसरिसनिसनिधनिधमगममगममगरिसरिसरिसनि-सधनिस । मधनिरिसानिसस । मममगममगरिगममधनिस निधनिधमगमगमपमरिस रिसनिसस ।

इति कङ्कणः । द्वितीयप्रहरोत्तरम् । १०७ ।

रत्नावल्यां रि-नी नस्तस्तीव्रतीव्रतरौ ग-मौ ।
गान्धारमूर्छना यत्र तत्रोक्तौ न्यासपञ्चमः ॥ ४७२ ॥

इति रत्नावली । द्वितीयप्रहरोत्तरम् ।

ध-हीने कल्पतर्वाख्ये तीव्रतीव्रतरौ ग-री ।
ऋषभोद्ग्राहसंयुक्ते षड्जन्याससमन्विते ॥ ४७३ ॥

रिगमपनिससनिपमपमगरिस रिगमरिगमपमगरिसनिसप निसरिस निसारि । गमपनिपमगरिगमगरिसनिसमा । पनि-सपनिसरिगमगरिसानिससा ॥

इति कल्पतरुः । तृतीयप्रहरोत्तरम् । १०९ ।

श्रीरागमेलसंभूता सोरटी रि-स्वरोद्ग्रहा ।
पञ्चमाहुम्फितोपेता रि पर्यन्तं पुनस्तथा ॥ ४७४ ॥
स हुम्फिता म-पर्यन्तमग्रस्वस्थानषड्जका ।

इति सोरटी । प्रथमप्रहरोत्तरम् । ११० ।

शुद्धस्वरसमुद्भूतो गान्धारोद्ग्राहसंयुतः ।
आरोहे त्यक्त-धो ज्ञेयो गान्धारैच्यवितोदितः ॥४७६॥
अग्रस्वस्थानसंयुक्तः पुन स्वस्थानसंयुतः ।
आन्दोलितनिषादाद्यो मारुर्धान्दोलितो मुहुः ॥४७७॥

---

१ स्वराच्छावि० २ धारच्यावि०

गपपनीध । निधधापमगरिस । गमपमगमपनिसनिधप-
मपमगमगरिससरिगमपमगरिस । गमपनीसगारिसानिसानिस-
निधपगमपागम गारिस ॥

इति मारुः । तृतीयप्रहरोत्तरम् । १११ ।

नाट्यमेलसमुद्भूतो रागः कुमुदसंज्ञकः ।
आरोहणे म-वर्ज्योक्तो गान्धारोद्ग्राहशोभितः ॥४७८॥

गपधनिससनिधपमगरिसरिगपमगरि । सनीसगपधनिस-
निधपधनिसनिधपमगरिस । गपपगपमगरिगपमगरिसनीस-
रिसनिसरिगपमगरिसनीसा ॥

इति कुमुदः । तृतीयप्रहरोत्तरम् । ११२ ।

नाट्यमेलसमुद्भूतो रागश्चक्रधरः स्मृतः ।
पञ्चमेन विहीनः स्यात्षड्जोद्ग्राहेण शोभितः ॥४७९

सरिगमधनिससनिधमगमगारिसारिगमगरिससरिगमधमग-
रिसरिगमग रिसरिनिधनिसनिधनिसधनिसरिगमगरिस ॥

इति चक्रधरः । तृतीयप्रहरोत्तरम् । ११३ ।

भैरवीमेलसंभूतो गान्धारेण विवर्जितः ।
आरोहे तु नि-वर्ज्यः स्यान्मादिः सिंहरवः स्मृतः ४८०

मपधसारिमरिसधसनिधपधपममरिमधससा । रिमपमरि-
सधसधसरिस पधसरिसनिधपधपममरिमधससा । रिमपमरि
सधसरिमपधसरिस निधपधपमपमरिमपमरिमधससा ॥

इति सिंहरवः । तृतीयप्रहरोत्तरम् । ११४ ।

श्रीरागमेलसंभूता ग-स्वरेण विवर्जिता ।
मञ्जुघोषा ध-पूर्वा स्यादारोहे त्यक्तनि-स्वरा ॥४८१॥

धसरिमपधसनिधपधमारिस । धमरिमपधपमधपमारिमप-
मरिमारि सधसनिधपधपमपमारिमपपमरिसधीसस ॥

---

१ नाटमे°

इति मञ्जुघोषा । तृतीयप्रहरोत्तरम् । ११५ ।

मुखारीमेलसंभूता म-हीना शिववल्लभा ।
न्यभावोद्ग्राहगान्धारा पांशुन्याससुशोभिता ।
अवरोहणवेलायां निषादेन सुशोभिता ॥ ४८२ ॥

गपधससनिधपनिधपपधधपगगारिसरिरिसरि । पपगपप-गरिरिगरि सरिरिसधससा । पापधानिधपनिधपपधधपगग-रिसरिरिसधस ॥

इति शिववल्लभा । द्वितीयप्रहरोत्तरम् । ११६ ।

शुद्धमेलसमुद्भूतः षड्जादिः स मनोहरः ।
आरोहे ग-रि-मैस्त्यक्त आन्दोलित-प-सान्वितः ॥४८३॥
धैवतं प्राप्य तस्माच्च संनिवृत्तोऽत्र कम्पितः[1] ।
पञ्चमात्षड्जमासाद्य निवृत्तो मध्यमं प्रति ।
तत्राप्यान्दोलितो गे च रौ[2] चै स्वस्थानशोभितः ४८४

ससपापधनिधपमापधनिसानिधपमापधनिधपमागारीस ।
सपसपाप धपपपापमपानिधधपासापासापामागारीस ॥

इति मनोहरः । द्वितीयप्रहरोत्तरम् । ११७ ।

भैरवीस्वरसंभूता निषादोद्ग्राहसंयुता ।
गान्धारे नैन्त्ययुक्ता या ज्ञेया साऽऽनन्दभैरवी ४८५

गिनिसगगागारिसरिरिसनिनिसा । निनिमगगमयपसगग मगगागरिस निनीससा । धापममपमगगमगगागगगागारि-सनिनिसगगारिसनिनिससा ॥

इत्यनन्दाभैरवी । सर्वदा । ११८ ।

शंकराभरणो रागः शंकरानन्दको भवेत् ।
रि-ग-पास्तत्र चांशाः स्यू रि-न्यासेन सुशोभितः ।
स्वस्वसंवादिनां योगाद्यत्र[3] स्याद्बहुकम्पनम् ॥ ४८६ ॥

---

१ °तः । पूर्वं निषादमा° । २ च संस्थितिशो° । ३ योगोयत्र ।

सरिगमपप्पप्पपमप्पप्पसमगरिगगागागरिगगागारिसरि-
गरिस । रीसरीसरीगरिसरीससनिधनिसरीसानिससासरिगम-
पासपारिधामनीपस । सनिधपमपमगगागारिसारिस ॥

इतिशंकरानन्दः । सर्वदा । ११९ ।

आरोहणे नि-योगेन सैन्धवी मानवी मता ॥ ४८७ ॥

धनिसरिमपमगारिसानीधाधानी सारिमपानिधपमागरिस-
रिसा । धनि सारिमागरिपमगरिसरीसधधनिस ॥

इति मानवी । सर्वदा । १२० ।

कल्याणमेलसंभूता राजधानी सुखप्रदा ।
आरोहणे ध-हीना स्याद्बहुकम्पमनोहरा ।
आम्रेडितस्वरैर्युक्तावरोहेऽपि ग-वर्जिता ॥ ४८८ ॥

सरिगमपनीसारीसनिसानिधपममारिसानिससनिपमगमगम-
पमधमरिम सनीसा । सरिगमपपममरिस । पनिसपनिसरि-
गमपममरिसनिपनीससा ॥

इति राजधानी । सर्वदा । १२१ ।

गौरीमेलसमुद्भूता षड्जोद्ग्राहोऽथ शर्वरी ।
सन्यासा पञ्चमांशां या स-नि-न्यासेन शोभिता ४८९

सरिगमपधनिससनिधपमपधपम । पप्पापमपप्पापमधनि
धपमासरिग मागरिससससससससनिसानिसानिधनिसानिधानिस-
निधनिधपमगमपमगमग । रिसानिधनिसरिगारिसानिधानिससा

इति शर्वरी । सर्वदा । १२२ ।

अनेनैव प्रकारेण रागा अष्टमिता मताः ।
द्वाविंशत्या शतं ते च प्रोक्ता लोकसुखाय च ॥४९०॥
एकस्मिन्नोद्भवे मेले न रागान्तरसंभवः ।
स्वरेषु पञ्चसु स्थायी यतो भवति सर्वदा ॥ ४९१ ॥
रसेवीरेऽद्भुते रौद्रे दीप्ता जातिरुदीरिता ।

मृदुर्जातिश्च शृङ्गार आयता हास्यके रसे ॥ ३९२ ॥
दैन्ये च करुणाजातिर्वीभत्से च भयानके ।
हास्यशृङ्गारयोर्मध्ये रसेष्वेतेषु जातयः ॥ ४९३ ॥
तत्तज्जातिरसैरेव स्वरास्तत्तद्रसात्मकाः ।
तादृश्यांशग्रहन्यासै रागैस्तत्तद्रसात्मता ॥ ४९४ ॥
पूर्वकोमलतीव्रैश्च तथा तीव्रतरेण च ।
अतितीव्रतमैनैव सर्वे रागा उदीरिताः ॥ ४९५ ॥
रिं च पूर्वं तथा तीव्रं तीव्रतरं च ग-स्वरम् ।
तीव्रतमं तथा गं च मं च तीव्रं स्वरं तथा ॥ ४९६ ॥
मं च तीव्रतमं धं च पूर्वाख्यं तीव्रसंज्ञितम् ।
तीव्रतरं निषादं च तीव्रतमं च नि-स्वरम् ॥ ४९७ ॥
इत्येतांश्च दश त्यक्त्वा रागलक्षणमीरितम् ।
द्वादशाभिर्विकाराद्यैः शुद्धैश्च सप्तभिः स्वरैः ॥ ४९८ ॥
एतैः कृत्वा प्रसिद्धा ये त एवात्र प्रकीर्तिताः ।
तत्तद्देशे च तैः कृत्वा रागा अपि प्रतिष्ठिताः ॥४९९॥

इति रागप्रकरणम् ।

अथ बद्धं निबद्धं च संगीतं द्विविधं स्मृतम् ॥
अनिबद्धं तु तत्प्रोक्तं निबद्धमधुनोच्यते ॥ ५०० ॥
निबद्धं गीतरूपं यत्तस्य लक्षणमुच्यते ॥
सुस्वरैर्गीयमानत्वाद्गीतमित्यभिधीयते ॥ ५०१ ॥
रामवेदादिदं गीतं संजहार पितामहः ॥
नारदेन तु तत्प्राप्य वीणायां वादनं कृतम् ॥ ५०२ ॥
गणतालस्वरैः कृत्वा मात्राभिश्च सुशोभिताम् ॥
तच्च गीतं पृथिव्यां तु नारदेन प्रतिष्ठितम् ॥ ५०३ ॥
तेन गीतेन हृष्यन्ते देवाश्च मुनयो नराः ॥
तस्य गीतस्य माहात्म्यं वक्तुं को वा क्षमो भवेत् ५०४

गीतेऽस्मिन्पञ्च नामानि प्रसिद्धान्युदितानि हि ॥
रूपं च रूपकं वस्तु प्रबन्धोऽजेयमित्यपि ॥ ५०५ ॥
पञ्चधा कथितो भागो गीतेऽस्मिन्पूर्वसूरिभिः ॥
आद्य उद्ग्राहको ज्ञेयो मेलापकस्तदुत्तरः ॥ ५०६ ॥
तृतीयो ध्रुवसंज्ञः स्याद्दंतुरः स्याच्चतुर्थकः ॥
अभोगः पञ्चमो भागः पञ्चानां लक्षणं ब्रुवे ॥५०७॥
आदावुद्गृह्यते गीतं तस्मादुद्ग्राहसंज्ञकः ॥
मेलापकः स विज्ञेयो ध्रुवकोद्ग्राहमेलनात् ॥ ५०८ ॥
ध्रुवत्वाध्रुवसंज्ञोऽयं ध्रुवभोगात्तु दंतुरः ॥
आभोगो गीतपूर्त्यर्थमिति भागाः प्रकीर्तिताः॥ ५०९ ॥
पदतालस्वराः पाटस्तेनो बिरुद एव च ॥
प्रबन्धश्च षडङ्गानि कथितानि मनीषिभिः ॥ ५१० ॥
पदानि वाचकाः शब्दास्तालाश्चञ्चुपुटादयः ॥
स्वराः षड्जादय स्तेस्युः पाटोवाद्योद्भवाक्षरम् ॥५११॥
तेन स्यान्मंगलः शब्दो बिरुदं गुणनामयुक् ॥
प्रबंधततयःपञ्च इति प्रोक्ताः क्रमेण च ॥ ५१२ ॥
षड्भिरेतैर्मेदिनी स्याद्विदिनी पंचभिर्मतेत् ॥
चतुर्भिर्दीपिनी जातिस्त्रिभिरङ्गैर्विलम्बिनी ॥ ५१३ ॥
द्वाभ्यां तारावली जातिरिति सूरिविनिर्णयः ॥
छंदस्तालादिनियमा न्त्रियुक्तः स्यादतोन्यथा ॥५१४॥
अनिर्युक्त इति द्वेधा प्रबंधः परिकीर्तितः ॥
तत्र गीतोपयोगित्वाद्गुणवर्णादि कथ्यते ॥ ५१५ ॥
आदिमध्यावसानेषु पतगां यान्ति लाघवम् ॥
भजमागौरवं यान्ति मनौ तु गुरुलाघवम् ॥ ५१६ ॥
मेर्भूमिर्देवता नेश्च वासवो भेश्च चन्दमाः ॥
घेर्वारिजेरविस्तेश्च स्वंसेऽ निल श्वरेऽनलः ॥ ५१७ ॥

लक्ष्मीर्विपुर्यशः सौख्यं दुःखं चाथ दरिद्रता ॥
देशो भूमिर्मृतिस्तेषामित्येतानि फलानि च ॥ ५१८ ॥
अकचटतपयशवर्णा स्तेषां तु देवताः ॥
सोमो भौमो बुधो जीवः शुक्रः शन्यर्कराहवः ५१९
वपुष्पीडा प्रथा विद्या भाग्यं रोगो मृतिर्भयम् ॥
आद्यस्थाने प्रयोगश्चेत्फलं तेषां क्रमाद्भवेत् ॥ ५२० ॥
अकचटतपयशाः स्थाने षष्ठे च सप्तमे ॥
भवत्येकादशस्थाने तेषु दुष्टैर्मृतिः फलम् ॥ ५२१ ॥
जीवनं यदि वाच्यस्य ब्रह्मा वा किं शिवोऽथवा ॥
पंक्तिषूर्ध्वासु तिर्यक्षु कोष्ठाः स्युर्दशपंच च ॥ ५२२ ॥
तिर्यक्कोष्टे ष्वकाराद्या वर्णालेख्याः क्रमेण तु ॥
अधोर्ध्वपंक्तिगा वर्णा वायुबीजानि सर्वदा ॥ ५२३ ॥
द्वितीयपङ्क्तिगा वर्णा वन्हिबीजानि नित्यशः ॥
तृतीयायां स्थिता वर्णा भूमिबीजानि केवलम् ॥ ५२४ ॥
चतुर्थपंक्तिगा वर्णा वारिबीजानि संततम् ॥
अन्त्यपङ्क्तिस्थिता वर्णाः खबीजानीति संमताः ॥ ५२५ ॥
भ्रमो वायुर्मृतिर्वन्हौ भूमौ लक्ष्मीर्जले सुखम् ॥
खबीजे धनहानिश्च वाच्यस्येति फलं भवेत् ॥ ५२६ ॥
स्तुत्याद्यश्लोकगीतादौ प्रयोगगणवर्णयोः ॥
फलान्येतानि जायन्ते तस्मादेतद्विचारयेत् ॥ ५२७ ॥
क्वचिदन्यत्र संप्रोक्तान्विशेषांस्तान्ब्रवीम्यहम् ॥
नकारो नाशयेल्लक्ष्मीं हकारस्तु हरेद्यशः ॥ ५२८ ॥
सकारः सर्वहृत्तस्माद्गीतादौ तं परित्यजेत् ॥
उद्ग्राहे भगणश्चैवमंतरे मतलास्तथा ॥ ५२९ ॥
आभोगे हटकीश्चैव नववर्णान् परित्यजेत् ॥
उद्ग्राहे तु दकारश्च मकारश्चान्तरे तथा ॥ ५३० ॥

आभोगे तु वकारश्च तत्र लक्ष्मीः फलं भवेत् ॥
देवतोषधि वाच्याः स्युर्दोषा एते भवन्ति न ॥५३१॥
मांगल्योषधिशब्दः स्यान्मनुष्यार्थो न दोषभाक् ॥
मात्राभिश्चापि गीतं स्यात्तत्तालानुसारतः ॥ ५३२ ॥
गीर्वाणमार्गतालाभ्यां गीतं दैवतमार्गितम् ॥
देशीतालेन गीर्वाणवाण्या तद्देवमानुषम् ॥ ५३३ ॥
मानुषं केवलं गीतं देशी तालेन भाषया ॥
भाषया वाऽपि भणितं (?) पुनस्तद्देवमानुषम् ॥५३४॥
गीतवर्णाश्च चत्वारो लघौ तद्द्विगुणा गुरौ ॥
प्लुते द्वादश वर्णाः स्युर्द्रुते द्वावेव कीर्तितौ ॥ ५३५ ॥
अणुद्रुते तदर्धं स्यादेवं वर्णमितिर्भवेत् ॥
अंगान्ते पदविश्रांतिर्यतिरित्युच्यते बुधैः ॥ ५३६ ॥

॥ इति यतिः ॥

प्रासस्तु पुनरुक्तिः स्यादष्टतो नार्थनैः क्वचित् ॥
आदिमध्यावसानेषु यथोक्तं प्रास ईरितः ॥
विना प्रासेन यद्गीतं विना नारीव भूषणम् ॥ ५३७ ॥

॥ इत्यनुप्रासलक्षणम् ॥

अथ गीतगुणाः ।

व्यक्तत्वं पूर्णता तत्र सौकुमार्यं प्रसन्नता ॥
सालंकारत्वं तत्र तद्द्वेधा स्वरशब्दस्फुटत्वतः ॥५३८॥
पूर्णत्वमपि पूर्णाङ्गमक ( [1]त्केत्वं ) त्वसमीरितम् ॥
स्वरशब्दार्थकोमल्यं सौकुमार्यं प्रकीर्तितम् ॥ ५३९ ॥
प्रसन्नत्वं स्फुटार्थत्वं सालंकारत्वमाहृतम् ॥
स्वरशब्दार्थवैचित्र्यं भरतादिमुनीश्वरैः ॥ ५४० ॥
माधुर्यं स्वरशब्दार्थलावण्यं तत्प्रकीर्तितम् ॥

---

१ धनुश्चिह्नान्तर्गतः पाठोऽधिक इति भाति.

देशकालप्रभेदेन सम्यक्त्वश्लाघ्यता मता ॥ ५४१ ॥
समत्वं समकालीनसमाप्तिस्तालशब्दयोः ॥
सरक्तत्वं सुखेनैव गात्रयन्त्रोत्थवर्णता ॥ ५४२ ॥
उच्चैरुच्चारितत्वं यद्विक्रु(क्रु)ष्टत्वमितीरितम् ॥
अन्यान्पञ्चगुणान्प्राहुर्गीतलक्षणकोविदाः ॥ ५४३ ॥
अभिन्नरागतालस्थरसाभिन्नरसात्मता ॥
अपौनरुक्त्यमग्राम्यं लोकशास्त्रव्यवस्थया ॥
विशिष्टजन्यता शिष्टप्रतिपादकता तथा ॥ ५४४ ॥

**अथ गीतदोषाः ।**

अत्रोक्तानां गुणानां ये त्वभावा दोषसंज्ञिनः ॥

**अथ सूडलक्षणम् ।**

त्रिविधाः स्युः प्रबन्धास्ते सूडस्था अलिसंश्रयाः ॥
विप्रकीर्णा इति प्राज्ञास्तेषां लक्षणमूचिरे ॥ ५४५ ॥
एलाकरणढेङ्कीभिर्वर्तन्या झोम्बडेन च ॥
लम्भरासैकतालीभिरष्टभिः सूड उच्यते ॥ ५४६ ॥
यस्योद्ग्राहस्य पूर्वार्धं द्रुतत्यागसुशोभितम् ॥
मन्दगत्योत्तरार्धं तु भवेदेला यदा तदा ॥ ५४७ ॥
यस्योद्ग्राहस्य पूर्वार्धं गीयते द्विरनन्तरम् ॥
उत्तरार्धं सकृत्पठ्य (?) तदा स्याद्ढेङ्किका पुनः॥५४८॥
यस्मिन्गीते स्वरा गेया सा भवेद्वर्तनी पुनः ॥
यस्योद्ग्राहः पञ्चमे स्याध्रुवः षड्जेति झोबम्डः॥५४९
ततः स्वेच्छानुसारेण ( ? ) गतिर्यत्र विलम्बिता॥
एकखण्डो द्विखण्डो वा यस्योद्ग्राहो(?)भवेदिह॥५५०
गीयतेऽसौ सकृद्विर्वा भवेद्यत्र ध्रुवः पुनः ॥
द्विराभोगो ध्रुवे मुक्तिः प्रलम्भः स तु लम्भकः(?)॥५५१
झोम्बडो रासतालेन रासः स एव संमतः ॥

लंभः सर्वैकताल्या स्याद्द्रुता गत्यैकतालिका ॥५५२॥

अथवा—

ध्रुवादिसप्तभिस्तालैः सूड इत्यभिधीयते ॥ ५५३ ॥

॥ इति सूडलक्षणम् ॥

वर्णो वर्णस्वरो गद्यं कैवाडश्चांकचारिणी ॥
कंदुकस्तुरगलीला च गजलीला द्विपद्यपि ॥
चक्रवालः स्वरार्थश्च गाथा क्रौंचपदस्तथा ॥ ५५४ ॥
कलहंसो द्विपथक आर्या च ध्वनिकुट्टिनी ॥
घट्टो वृत्तं मातृका च तोटको रागमिश्रकः ॥ ५५५ ॥
तालार्णवस्तथा पंचताल इत्यलिसंप्रियाः ॥
कर्णाटभाषयोत्पन्नः प्रबंधो वर्णसंज्ञकः ॥ ५५६ ॥
स एव स्वरतालाभ्यां वर्णस्वरोऽपि कथ्यते ॥
गद्यं निगद्यते छंदोहीनं पदकदंबकम् ॥ ५५७ ॥
उद्ग्राहध्रुवकौ यस्य पाटैरेव विनिर्मितौ ॥
पदैः कृत्वांऽतराभोगौ कैवाडोऽत्यंतशोभितः ॥५५८॥
सर्वार्थस्य च गीतस्य गानं चेदंगचारिणी ॥
कंदः स्यादेकखंडेन गतिर्यस्य विलम्बिता ॥ ५५९ ॥
झम्पातालेन तुरगलीला सा सुखदायिनी ॥
तालेन ध्रुवनाम्ना तु गजलीला प्रतिष्ठिता ॥ ५६० ॥
द्विपदी स्याद्द्विखंडेन भवेद्ध्यश्च गतित्रयम् ॥
पूर्वपूर्वाक्षरप्रांतो योंऽत्यो वर्णचयः स चेत् ॥ ५६१ ॥
उत्तरोत्तरवाक्यादौ चक्रवालस्तदोच्यते ॥
यत्र स्वराक्षरैरेव वांछितार्थोऽभिधीयते ॥ ५६२ ॥
स स्वरार्थप्रबंधः स्यादयमन्वर्थनामकः ॥
तालेन रहिता गाथा धातुना सर्वदा युता ॥
पदैः स्वरैः पदैः पाटैः पदैस्ते द्विपदैः पुनः ॥ ५६३ ॥

विरुदेन पदैः क्रौंचपदाख्यः सोऽभिधीयते ॥ ५६४ ॥
तालेनहंसनादात्तु कलहंसोऽभिधीयते ॥
योऽनिबद्धो निबद्धश्च द्विपथः सोऽभिधीयते ॥ ५६५ ॥
आर्यावृत्तेन यज्जातमार्या साऽन्वर्थनामिका ॥
अर्थांतरं यत्र भाति सोऽयं स्याद्ध्वनिकुट्टिनी ॥५६६॥
यत्र स्यात्सादबाहुल्यं धट्टः स एव संमतः ॥
यज्जातं सर्ववृत्तैश्च वृत्तं तत्कथितं बुधैः ॥ ५६७ ॥
यावद्भिरक्षरैर्जातं क्रमात्सा मातृका भवेत् ॥
सर्वमंत्रमयी यस्मात्सर्वसिद्धिप्रदायिनी ॥ ५६८ ॥
तोटकस्तोटकेनैव वृत्तेन स विराजते ॥
रागाणां मिश्रणादेव संमतो रागमिश्रकः ॥ ५६९ ॥
तालार्णवोऽपि तालैस्तुबहुभिर्निर्मितो भवेत् ॥
पंचतालोऽपि तालैस्तु पंचभिः संमतः सताम् ॥५७०॥

इत्यालिसंश्रयाः ॥

श्रीरंगः श्रीविलासः स्यात्स च भंगीरतः परम् ॥
पंचानन उमापूर्णस्तिलकाख्य उदीरितः ॥ ५७१ ॥
विजयो वस्तुसंज्ञश्च त्रिपदी च चतुष्पदी ॥
षट्पदी सिंहलीला च हंसलीला चतुर्मुखः ॥ ५७२ ॥
सुदर्शनास्त्रिभंगी च त्रिपथो दंडकस्तथा ॥
सांपटः कंदुकश्चर्या चर्चर्या हर्षवर्धनः ॥ ५७३ ॥
श्रविर्धनः खरांगश्च तथा हरिविलासकः ॥
राहडी मंगलाचारो वंदनं पद्धडी तथा ॥ ५७४ ॥
धवलो मंगलो लोली वीरश्रीर्दोल्लरी पुनः ॥
वादंतीति षट्त्रिंशद्विप्रकीर्णाः सुसंमताः ॥ ५७५ ॥
चतुर्भांशगतालैस्तु श्रीरंगोत्थपदान्वितः ॥
पंचभिस्तालरागैश्च स्वरांत्यः श्रीविलासकः ॥ ५७६ ॥

श्रीरंगः श्रीवल्लीत्येतौ वाच्यस्य श्रीफलप्रदौ ॥
तेनांतः पंचभंगी स्यात्ताले रागैश्च पंचभिः ॥ ५७७ ॥
रागाभ्यामपि तालाभ्यां पंचाननोऽत्यपाटकः ॥
ताले रागैस्त्रिभिः प्रोक्त उमातिलकसंज्ञकः ॥ ५७८ ॥
विजयाख्येन तालेन विजयः स्याज्जीवनप्रदः ॥
यस्मिन्वा भूषणं वर्ज्यं तद्गीतं वस्तुसंज्ञकम् ॥ ५७९ ॥
त्रिपदादित्रयं गीतं तत्र देशस्य भाषया ॥
तत्तत्संख्याविशिष्टेन खंडेन सुखदायकम् ॥ ५८० ॥
वर्णानां नियमाभावैस्तत्र दोषो न विद्यते ॥
सिंहलीलेन तालेन सिंहलीलः स उच्यते ॥ ५८१ ॥
हंसलीलोऽपि तालेन हंसाख्येन सुखप्रदः ॥
एकस्मिन्नेव समये चत्वारस्तालधारिणः ॥ ५८२ ॥
चतुर्मुखः स विज्ञेयः समकालेन शोभितः ॥
पदैश्च बिरुदैस्तेनैः सुदर्शनो निगद्यते ॥ ५८३ ॥
त्रिभी रागैस्त्रिभिस्तालैस्त्रिभंगी स्यात्षडंगकः ॥
त्रिपथः स तु विज्ञेयो यस्मिन्नस्ति गतित्रयम् ॥५८४॥
नास्ति यस्यांतरं यस्मिन्दंडकः स निगद्यते ॥
झंपातालेन यो गेयो संपटः सोऽभिधीयते ॥ ५८५ ॥
तालेन कंदुकेनैव कंदुकः स निगद्यते ॥
पदैः पाटैस्तथाऽऽर्या स्याच्चर्याद्यन्तकैः पदैः ॥५८६॥
पदैश्च बिरुदैर्हर्षवर्धनः स्वरपाटकैः ॥
तालमानद्वयन्यासो भवेच्छ्रीवर्धनाभिधः ॥ ५८७ ॥
मध्यमध्यस्वरैर्यः स्यात्स्वरांगःसोऽभिधीयते ॥
पादैश्च बिरुदैः पाटैस्तेनैर्हरविलासकः ॥ ५८८ ॥
तालस्थाने तु योगेन राहडी सोऽभिधीयते ॥
शुभवाचकशब्दैस्तु मंगलाचार ईरितः ॥ ५८९ ॥

गीते यस्मिन्मुखं वर्ण्यं वदनं तत्प्रकीर्तितम् ॥
यस्मिन्गीते मुनिर्वर्ण्यो ज्ञेया सा पद्धडी पुनः ॥ ५९० ॥
प्रातःकाले तु यो गेयो धवलः स प्रकीर्तितः ॥
विवाहादिकमांगल्ये यो गेयो मंगलं भवेत् ॥ ५९१ ॥
पद्यं शिशुसुखार्थाय लोली ज्ञेया विचक्षणैः ॥
प्रतिपद्यं यत्र शुद्धं वीरश्रीसुखदायिनी ॥ ५९२ ॥
सा ढोल्लरीति कथिता लाटभाषाविनिर्मिता ॥
उर्वी स्वल्पाक्षरैर्वर्णैर्जाता सा बहुभिः स्वरैः ॥ ५९३ ॥
यज्जातं पाटवर्णैस्तु वादंतीति प्रतिष्ठिता ॥ ५९४ ॥

इति षट्त्रिंशद्विप्रकीर्णप्रबंधलक्षणानि ॥

यावद्द्राविडभाषाभिर्बिंदुः स्यात्सुखदायकः ॥
सर्वैस्तालैश्च युक्तो यः सदा द्रुतगतिर्भवेत् ॥ ५९५ ॥

इति बिंदुः ॥

तैलंगभाषयोत्पन्नो दरुर्द्रुतगतिर्भवेत् ॥

इति दरुः ॥

अष्टकं त्रिपुटेनैव पद्यैरष्टैश्च ईरितम् ॥ ५९६ ॥
सर्वभाषासमुत्पन्नं घंटानादेन संयुतम् ॥
तत्र चान्यद्विशेषस्तु ज्ञातव्यः संप्रदायतः ॥ ५९७ ॥

इत्यष्टपदी ॥

औत्तरादिकभाषाभिर्यत्तु ध्रुवपदं स्मृतम् ॥

इति ध्रुवपदम् ॥

वर्णैरेतेषु स्वल्पत्वं स्वरैरत्र समीरणा ॥ ५९८ ॥

इति गीतप्रकरणम् ॥

वाङ्मातुरुच्यते गेयं धातुरित्यभिधीयते ॥
वाचा गेयं च कुरुते यः स वाग्गेयकारकः ॥ ५९९ ॥
कवितायां प्रसिद्धः स्याद्रागज्ञोऽपि तद्भवेत् ॥ (?)

रागद्वेषपरित्यागी निर्द्वेषः सार्द्रचित्तवान् ॥ १०० ॥
त्रिस्थानगमकैर्युक्तो योऽयमुत्तम ईरितः ॥
विधानाधिकतो धातुमल्पधातुं स मध्यमः ॥ १०१ ॥
प्रकुर्वन् रम्यकां धातुं स्वल्पधातुश्च सोऽधमः ॥१०२॥

॥ इति वाग्गेयकारलक्षणम् ॥

मार्गं देशी च यो वेत्ति स गांधर्वोऽभिधीयते ॥
यो वेत्ति केवलं मार्गं स्वरादिः स निगद्यते ॥ १०३ ॥
यो वेत्ति केवलं देशी पदादिः स उदीरितः ॥
गांधर्व उत्तमो ज्ञेयः स स्वरादिस्तु मध्यमः ॥ १०४ ॥
पदादिरधमः प्रोक्तो भरतादिमुनीश्वरैः ॥
अथ तस्य प्रगातुश्च लक्षणं कथयाम्यहम् ॥ १०५ ॥
तद्वेत्ति यतिगीतं यो गायकः स प्रकीर्तितः ॥
श्रुतिजातिस्वराभिज्ञो रसज्ञो जातिगानवित् ॥ १०६ ॥
भाषांगादिपरिज्ञानी लयज्ञस्तालवित्तमः ॥
प्रबंधगाननिष्णातो विविधालापकोविदः ॥ १०७ ॥
त्रिस्थानगमकैर्युक्तो मधुरध्वनिमान्भवेत् ॥
कंपादिदोषहीनश्च सावधानो जितश्रमः ॥ १०८ ॥
शुद्धच्छायालगाभिज्ञः सर्वदाऽभ्यासको भवेत् ॥
एतद्गुणविशेषाच्च उत्तमं गायनं जगुः ॥ १०९ ॥
गुणैः कतिपयैर्हीनो निर्दोषो मध्यमः स्मृतः ॥
उत्कैर्गुणैर्विशिष्टोऽपि सदा यो गायनाधमः ॥ ११० ॥
खाद्वलः कफधातुः स्यान्नाराटः पित्तधातुकः ॥
वोवको वातधातुः स्यान्मिश्रको मिश्रणाद्भवेत् ॥ १११ ॥
कथ्यते लक्षणं तेषां खाद्वलो मधुरध्वनिः ॥
ओदिल्ल एव एकः स्यात्खाद्वलः सोऽत्र मध्यमः ॥ ११२ ॥
स्थानत्रयेऽपि नाराटः प्रगल्भः सूक्ष्मनादकः ॥

वोवको रूक्षशब्दः स्यात्कठिनोच्चतरध्वनिः ॥६१३॥
एतत्त्यष्टगुणाः सर्वे तिष्ठंति मिश्रके पुनः ॥
श्रेष्ठश्च त्रिषु मिश्रः स्याद्गुणबाहुल्ययुक्ततः ॥ ६१४ ॥
संदष्टादिकदोषाः स्युस्त्रिंशच्च गायनेऽसति ॥
संदष्टः सीत्कृती चैव भीतशंकितकंपिताः ॥ ६१५ ॥
कराली कपिलः काको वितालः करभाधरौ ॥
झोंबडस्तुम्बकी वक्री फुल्लगल्लस्तु फेरिणः ॥ ६१६ ॥
निमीलको हतस्वानो विरसो व्यक्तमिश्रकः ॥
अनवधानकः प्रोक्तः स्थानभ्रष्टानुनासिकौ ॥ ६१७ ॥
विमनश्चालको दोलवृकदृष्टयूर्ध्वगामिनौ ॥
यः संदिश्याक्षरं गायेदसौ संदिष्ट उच्यते ॥ ६१८ ॥
उद्घृष्टो विरसो दोषः सीत्कारी सीत्कृतैर्मुहुः ॥
भयान्वितस्तु यो गायेत्स्तंभितो गायनोच्यते ॥६१९॥
शंकितः सुबुधैरुक्तस्त्वरया यस्तु गायति ॥
कंपितः कंपिताज्ज्ञेयः स्वभावाद्गात्रशब्दयोः ॥ ६२०॥
यो गान द्भृतास्योऽपि कराली स तु गायकः ॥
योऽगायेत्कपिलोऽसौ तु स्वराञ्यूनानकश्रुतीन् (?)६२१
काकस्वरेण यो गायेत्काकस्वर उदीरितः ॥
यस्य नास्ति लयज्ञानं वितालः स निगद्यते ॥ ६२२ ॥
दत्त्वा तु मस्तकस्कंधे यो गायेत्करभः स्मृतः ॥
छागत्रध्वनिमान्यः स्याद्बुद्बडोऽधमगायकः ॥ ६२३ ॥
शिरालभालवदनग्रीवामुखविकारवान् ॥
झोंबकः कथितः सद्भिर्गायनः सर्वतोऽधमः ॥ ६२४ ॥
तुंबकी तुंबकाकारो वक्री मुखविकारवान् ॥
यो गायेत्फुल्लगल्लः स्याद्गातॄणामधमो मतः ॥ ६२५ ॥
आस्यं प्रसार्य यो गायेत्प्रसारी स तु गायकः ॥

नेत्रौ निमील्य यो गायेत्स तु प्रोक्तो निमीलकः॥६२६॥
यस्तुवर्जस्वरो गायेत्स हतस्वर उदाहृतः ॥
नीरसो रक्तिहीनो यः स प्रोक्तो विरसाधमः ॥६२७॥
अव्यक्तवर्णो यो गायेदव्यक्तः स निगद्यते ॥
रागाणां मिश्रणादेव कथ्यते स तु मिश्रकः ॥ ६२८ ॥
स्थाय्यादिष्ववधानेन विमुक्तोऽनवधानकः ॥
स्थाने स्थातुं न शक्नोति मंदो गानक्रियासु यः ॥६२९॥
स्थानभ्रष्टः स कथितो गानज्ञैर्गायनोऽधमः ॥
गेयं नासिकया गायन्कथ्यते सानुनासिकः॥ ६३० ॥
चित्तमन्यत्र संस्थाप्य यो गायेद्विमना भवेत् ॥
चालयित्वा करं गायेद्यः स चालक उच्यते ॥ ६३१ ॥
मस्तकं दोलयन्गायेद्यः स दोल उदाहृतः ॥
दृष्टिमेकत्र यः स्थाप्य गीतं गायति यः सदा ॥६३२॥
एकदृष्टिः स तु प्रोक्तो गायकः सर्वतोऽधमः ॥
मुखमुद्धृत्य यो गायेदूर्ध्वगायी स ईरितः ॥ ६३३ ॥
द्वौ दोषौ पुनरुच्येते इति पादपशावकौ ॥
तालरागौ न जानाति यो गायेत्पादपो भवेत् ॥ ६३४॥
अज्ञात्वा गीतमर्थं यो गायेदसौ तु शावकः ॥ ६३५ ॥

## इति गायनगुणदोषाः ॥

इतिकृष्णपण्डितसुताहोबलपण्डितविरचिते संगीत-
पारिजाते रागगीतविचारो नाम काण्डः प्रथमः ॥१॥

---

# अथ द्वितीयः काण्डः

श्रीगणाधिपतये नमः ।

अथ वाद्यं समानद्धं घनरूपं श्रुतीरितम् ॥
नत्वा सर्वततं श्रीशं क्वणद्वंशं ब्रवीम्यहो ॥ १ ॥
यतो वदति पाटादि ततो वाद्यमुदीरितम् ॥
बहुधा तस्य भेदस्तु विस्तरेणोच्यतेऽधुना ॥ २ ॥
तदप्युदीरितं वाद्यं यस्मिन्नादस्तु जायते ॥
चतुर्विधं तच्च ततमानद्धं सुषिरं घनम् ॥ ३ ॥
तद्धेतुत्वाज्जन्यनादश्चतुर्धेति सतां मतम् ॥
जन्यभिन्नस्तु यः कश्चिन्नित्यो नादः स एव हि ॥४॥
मध्याह्ने वा निशीथे वाऽरण्ये संघगते जनैः ॥
अनादतोऽथ यन्नृणां प्राणे मूर्ध्निगते स्फुटः ॥ ५ ॥
यः शृणोति द्रुतं प्राणी सदानंदमनाहतम् ॥
यतो नादांतरे सक्तं प्राणिनामिंद्रियं सदा ॥ ६ ॥
नित्यत्वादिकभावेन प्राणौ तौ द्विविधौ मतौ ॥
भेदस्तंत्रीगतो भूयो वीणादिकप्रभेदतः ॥ ७ ॥
वाद्यं ततेति वीणा स्यादष्ट धा सानिरूप्यते ॥
रुद्रवीणा ब्रह्मवीणा तौंबुरं स्वरण्मडलम् ॥ ८ ॥
पिनाकी किन्नरी दंडी रावणस्य करोऽपरः ॥
यस्मात्सर्वेषु वाद्येषु वीणाद्याश्च प्रधानतः ॥ ९ ॥
तत्स्वरूपं प्रवक्ष्यामि लोकशास्त्रव्यवस्थया ॥
वीणादंडप्रमाणं तु मुष्टिद्वादशभिः स्मृतम् ॥ १० ॥
तस्मिन्मुष्टित्रयं वामे त्यक्त्वा मेरुर्विधीयते ॥
सोऽपि द्व्यंगुलमानेन मेरुरुन्नत उच्यते ॥ ११ ॥

ततोऽपि तिलमात्रेण संमतः कर्द उन्नतः ॥ ( ? )
उन्नतावपि दीर्घौ स्तश्चतुरंगुलमानतः ॥ १२ ॥
स्थानकान्यपि चत्वारि कर्षे तु पवमानतः ॥
क्रमादुच्चतराणि स्युरनुकूल्यानि वादने ॥ १३ ॥
तत्कर्ददक्षिणे भागे दंडास्यो योजयेद्बुधः ॥
मेरुतोंऽगुलिनाऽप्यंतो मुष्टियुग्मेन कर्ह(र्द)तः ॥ १४ ॥
मेरोरधःप्रदेशे तु तुंबौ द्वौ योजयेद्बुधः ॥
दंडतुंबकयोर्मध्ये तुंबकौ दंडकारिणौ ॥ १५ ॥
वक्ष्यते मौर्णिकानं च मेरुतो वामपार्श्वयोः ॥
तंग्रतः( ? ) स्वरसिद्ध्यर्थं चतस्रो मेरुकर्दयोः ॥ १६ ॥
वदंत्याद्याः सस्वरादीन् पस्वरादीन् द्वियीयकाः ॥
द्वे अग्रे अवशिष्टे स्तो मंद्रस्योक्ता अथो पुनः ॥ १७ ॥
दंडस्य दक्षिणे भागे तिस्रोऽन्याः स्वस्वदेशतः ॥
स्वरसंवादिसिद्ध्यर्थं ताश्च स्युः श्रुतिसंज्ञया ॥ १८ ॥
मेरुस्थास्वष्टमांशनेन स्थौल्यं स्यादुत्तरोत्तरम् ॥
तंत्रीणां तत्र संबंधो दोरकैरपि संमतः ॥ १९ ॥
शालेस्तुषाप्रमाणेन पक्ववंशेन निर्मिता ॥
अथवा पट्टसूत्रेण या सा जीवा सुखप्रदा ॥ २० ॥
कर्ह(र्द)तंत्रीमध्यदेशे तां जीवां स्थापयेद्बुधः ॥
सा शैथिलं समुत्पाद्य करोनि मधुरध्वनिम् ॥ २१ ॥
सारिकायाश्च संबंधो मधूच्छिष्टेन संमतः ॥
गीतकांडे स्वरस्थानं सिद्धं तदिह नोच्यते ॥ २२ ॥
एतल्लक्षणयुक्ता या रुद्रवीणेति कथ्यते ॥
रुद्रस्येयं प्रिया यस्माद्रुद्रवीणेति कीर्तिता ॥ २३ ॥
सर्वतः सर्वकाले या सर्वेषां सुखदायिनी ॥
तस्याः स्मरणमात्रेण सर्वपापैः प्रमुच्यते ॥ २४ ॥

दंडः शंभुरुमा तंत्री ककुभः कमलापतिः ॥
इंदिरा पत्रिका ब्रह्मा तुंबो नाभिः सरस्वती ॥ २५ ॥
दोरको वासुकिश्चैव जीवा तत्र तु चंद्रमाः ॥
मोर्णिकाः स्युर्ग्रहा यत्र मेरुः स्याद्देवतालयः ॥
सर्वदेवमयी यस्माद्वीणेयं सर्वमंगला ॥ २६ ॥

## ॥ अथवीणावादुकलक्षणम् ॥

सुदृष्टिः सरलः शुद्धो दीर्घबाहुर्दृढासनः ॥२७ ॥
रागरागांगभाषांगक्रियांगोपांगभेदवित् ॥
श्रुतिजातिस्वरज्ञश्च महस्येक्षाविलक्षणः ॥ ( ? ॥२८॥
सुमुखः सुरसी चैव सावधानो जितश्रमः ॥
गमकेषु प्रवीणः स्यान्मेलज्ञः सरलांगुलिः ॥ २९ ॥
शिष्यस्तादृश एव स्यात्सुमना गुरुभक्तिमान् ॥
दग्धास्यः कुटिलो यः स्याद्वीणा तस्य तुदुर्लभा ॥३०॥

## ॥ अथ वादनप्रकारः ॥

तर्जन्यंतक्रिया या सा क्षमा सैव निधिर्भवेत् ॥
निधिस्तु वैपरीत्येन वातसंज्ञो मतः मताम् ॥ ३१ ॥
मध्यमास्फालनस्यापि मध्यमेत्यभिधा मता ॥
घातस्थाने निबद्धे चानिबद्धे तु यथेच्छया ॥ ३२ ॥
पार्श्वस्थो वादयेत्तंत्रीरंगुल्याऽपि कनिष्ठया ॥
निधिः कनिष्ठया युक्तस्तालशब्देन भण्यते ॥ ३३ ॥
वामस्कंधे पदद्वंद्वे वीणां संस्थाप्य वादयेत् ॥
वामस्य मध्यमारोहे तर्जनी चावरोहणे ॥ ३४ ॥
उभयोश्च समारंभौ वैपरीत्येन संमतम् ॥
योऽपेक्षितः स्वरस्तस्मिन्प्रदद्यादंगुलीं बुधः ॥ ३५ ॥
समवर्णे क्षमावातौ विषमे मध्यमा भवेत् ॥

गुरावंतरलोपः स्यात्तास्तलक्रमतो मतम् ॥ ३६ ॥
सा तु स्वरानुसारेण गमकैरेव वाद्यते ॥
तादृशेनैव वाद्येन संतुष्टः श्रीपतिर्भवेत् ॥ ३७ ॥
आस्फालनं विना जातो योऽनुस्वरः स कथ्यते ॥
गीतलक्षणानि यावन्ति तावंत्यास्फालनानि च ॥ ३८ ॥
केवलं यत्र धातुः स्यात्तत्र भवंत्यनुस्वराः ॥
रागे तत्र विशेषोऽस्ति क्षमा च मध्यमा भवेत् ॥ ३९ ॥
सर्वास्वपि च वीणासु प्रकारोऽयं मतः सताम् ॥
तंत्रीद्वयेन नकुला त्रितंत्र्यन्वर्थनामका ॥ ४० ॥
चतसृभी राजधानी विपंची पंचभिः स्मृता ॥
षड्भिस्तु शार्वरी वीणा सप्तभिः परिवादिनी ॥ ४१ ॥
इत्यासामपि वीणानां नास्ति भेदो विवादने ॥
ब्रह्मवीणाऽपि सा ज्ञेया दारुजा सुखदायिनी ॥ ४२ ॥
तत्रैकांशेऽप्यधोदेशे विशालत्वं सतां मतम् ॥
दैर्घ्यं वीणाप्रमाणेन पूर्ववत्सारिकास्थितिः ॥ ४३ ॥
तस्यामादौ तु षड्जौ द्वे सूक्ष्मे ते लोहजो ततः ॥
अष्टमांशेन पुष्टाऽन्या तृतीया पंचमी भवेत् ॥ ४४ ॥
अवशिष्टे तु तंत्र्यौ द्वे लोहभिन्नेन संभवे ॥
उत्तरोत्तरमत्रापि पुष्टित्वं ह्यष्टमानतः ॥ ४५ ॥
यद्यन्नोक्तं ततो ज्ञेयं वादने चांगुलीद्वयम् ॥
अत्र स्युर्गमकाः सर्वे मिश्रिताश्च परस्परम् ॥ ४६ ॥

॥ इति ब्रह्मवीणा ॥

तौंबुरं तुंबरोर्वाद्यं दारुजं सुखसाधनम् ॥
निबद्धमनिबद्धं च तदपि द्विविधं स्मृतम् ॥ ४७ ॥
यन्निबद्धं स्वरस्थाने तंत्र्या तद्वेष्टितं भवेत् ॥
तस्मिंस्तत्र्यश्चतस्रः स्युरंगुलिभ्यां च वादनम् ॥ ४८ ॥

दीर्घत्वादिप्रमाणं तु पूर्ववत्संमतं सताम् ॥
तंत्रीणां बंधनादूर्ध्वं विन्यस्याश्च विमुष्टितः ॥ ४९ ॥
मध्यदेशे ततस्तास्मिन्पूर्ववत्स्वरमाचरेत् ॥
अष्टौ तस्य प्रमाणेन ते ह्याधिक्यं यदा भवेत्॥ ५० ॥
तदा षड्जप्रमाणेन सोश्वो नेयो विदूरतः ॥

॥ इति निबद्धतौंबुरम् ॥

परे तंन्त्र्यः सप्त पंच चतस्रो वा भवंति हि ।;
वैष्टनेन विनास्थात्वं सर्वमस्मिंश्च पूर्ववत् ॥ ५१ ॥

॥ इत्यनिबद्धतौंबुरम् ॥

मंडलं स्यात्स्वरैरेव यतस्तत्स्वरमंडलम् ॥
अंगुलिव्यवधानेन पृथक्तंत्रीप्रतिस्वरम् ॥ ५२ ॥
मंद्रादामध्यमं षड्जं दैर्घ्यं नूनं ततो भवेत् ॥
स्वरस्थानानुसारेण पंचकोणं सतां मतम् ॥ ५३ ॥
मंद्रस्थानस्थितास्तंत्रीरस्थूलाः स्युर्यथाक्रमात् ॥
हन्यते या यदा तंत्री तया शब्दः प्रजायते ॥ ५४ ॥
उत्तराहननेनैव नाशमाप्नोत्ययं ध्वनिः ॥
आरोहणेऽवरोहेऽपि त्वंगुल्या मध्यमाख्यया ॥ ५५ ॥
वामहस्तस्थिताद्दात्राज्जायंते गमका अपि ॥
मंडलं स्याद्यदाऽऽनद्धं सा वीणा मत्तकोकिला ॥५६॥
तस्यांतेऽग्रैस्तदाधातु भिन्न एव सुसंमतः ॥
जीवास्तत्र तदा वामे गमका अश्वतो वदिः (?) ॥५७॥
कंपनादिक्रियतंत्र्यामंगुल्यानामनुनया ॥ ५८ ॥(?)

॥ इति स्वरमंडलम् ॥

दीर्घता स्यात्पिनाकिन्यामन्ययंत्रार्धमानतः ॥
वालजेनाश्वपुच्छस्य धनुषा वाद्यहेतुना ॥ ५९ ॥
अवनद्धा यदा सा स्यात्तस्यांतश्चास्तु पट्टजः ॥

तद्गर्भो नारिकेलस्य काष्ठजः कांस्यजोऽपि वा ॥ ६० ॥
तद्वामांगुलिसंबद्धः पार्श्वदेशेन संमतः ॥
धनुषाऽऽपूर्य सा तस्यां यावद्वर्णानुसारि च ॥ ६१ ॥

॥ इति पिनाकी ॥

वीणावत्किन्नरी या सा तुंबत्रयेण संमता ॥
योऽनया वाद्यते रागस्तत्स्यां ते ते स्वरा मताः ॥६२॥
अत्र तंत्रीद्वयं साधुस्तन्मेरुश्चांकुशं भवेत् ॥
तस्मिंस्तत्र्यंतरं ज्ञेयं सप्तांगुलिप्रमाणतः ॥ ६३ ॥
अंतरं च तयोः कुर्यात्तिर्यगोभूमिमानतः ॥
युगपद्वैपरीत्येन हननं वादने मतम् ॥ ६४ ॥

॥ इति किन्नरी ॥

वामे तुंबेन या युक्ता सा दंडी मेरुवर्जिता ॥
तंत्रीभिर्धातुभिस्तिसृभिर्याः स्युः समन्विताः (?) ॥६५॥
कर्तयास्फालनेनैव सा निबद्धा विराजते ॥
तत्रास्फालनवेलायां तुंबाघातं च वक्षसि ॥ ६६ ॥
रंजकत्वं यथा कुर्यात्स्वरपाटानुसारतः ॥

॥ इति दंडी ॥

अन्यानि ततवाद्यानि कल्पनीयानि यत्नतः ॥

॥ इति ततवाद्यानि ॥

॥ अथानद्धम् ॥

अष्टावानद्धभेदाः स्युर्मृदंगादिप्रभेदतः ॥
मृदंगो दुंदुभिर्भेरी रुञ्जाडमरुपट्टहाः ॥ ६९ ॥
चक्रवाद्यं कुडुक्काख्यं इत्येषां लक्षणं ब्रुवे ॥
रक्तचंदनसंजातो द्विमुखो मध्यमांतरः ॥७० ॥
अयसा खादिरोत्पन्नो मृदंगो मेषचर्मयुक् ॥
दीर्घो द्वादशमुष्टिः स्यात्तस्याऽऽस्यं द्वादशांगुलि ॥७१॥

स्यात्तस्य मध्यदेशस्य परिधिर्दीर्घयामतः ॥
तस्याऽऽस्ययोर्बहिर्देशे वलयौ स्तोऽपि लोहजौ ॥७२॥
तयोश्च चर्मसंबंधस्तयो रंध्राणि विंशतिः ॥
तेष्वेव सुखदं सूक्ष्मैर्दोरकैर्योजयेद्बुधः ॥ ७३ ॥
तेषां विकर्षणेन स्याद्द्रुतिरपि यथेच्छया ॥
मंजुध्वनिप्रसिद्ध्यर्थं कर्णिकां दक्षिणामुखे ॥ ७४ ॥
प्रदद्याल्लोहचूर्णोस्यां षडंगुलप्रमाणतः ॥
मध्ये पिष्टं प्रदातव्यं वामेऽप्युक्तप्रमाणतः ॥ ७५ ॥
मध्यदेशे मृदंगस्य ब्रह्मा वसति सर्वदा ॥
तथा तिष्ठंति तल्लोके देवा अत्रापि संस्थिताः ॥ ७६ ॥
सर्वदेवमयो यस्मान्मृदंगः सर्वमंगलः ॥ ७७ ॥

॥ इति मृदंगलक्षणम् ॥

॥ अथवाद्योद्भवाक्षराणि ॥

उमापतिप्रणीतास्ते पाटवर्णाश्च विंशतिः ॥
हलः स्वरस्तथा षट्के ज्ञातव्या गीतकोविदैः ॥ ७८ ॥
कवर्गे विषमा वर्णाश्चवर्गे तु जसौ स्मृतौ ॥
टवर्गश्च तवर्गश्च पवर्गः पंचमः स्मृतः ॥ ७९ ॥
वकारेण विनांऽतस्था ऊष्मस्त्वंत्यः प्रकीर्तितः ॥
औकारेण विना सर्वे स्वरा अत्र तु संमताः ॥ ८० ॥
तथैव दन्त्यमूर्धन्यो स्वरावत्र न संमतौ ॥
कादिस्वरस्य युक्तानां प्रयोगश्च निरूप्यते ॥ ८१ ॥
आद्य त्रयं कवर्गः स्याद्धकारे स्याद एव तु ॥
जझयोरः स्वरः प्रोक्तो मकारश्च समाश्रितः ॥ ८२ ॥
अकारः स्याट्टवर्गे तु डकारेण विना पुनः ॥
उटयोरिस्वरः प्रोक्तस्त आदिमास्त्रयः स्वराः ॥ ८३ ॥
वर्जयित्वा थकारेषु स्वराः सर्वे सुसंमताः ॥

आद्यत्रयं दकारे स्याद्धद्वयेन धः स्मृतः ॥ ८४ ॥
नकारोत्वस्वरः प्रोक्तो मनुष्यादिस्वरः पुरः ॥
वर्गभिन्नेषु वर्णेषु संमतः प्रथमस्वरः ॥ ८५ ॥
द्वितीयांतस्य वर्णे तु द्वितीये तु स्वरो भवेत् ॥
स्वराणां ऱ्हस्वदीर्घत्वं वर्णे कालानुकूलतः ॥
देवतामात्रिकानां यास्ता एवात्रापि संस्मृताः ॥ ८६ ॥

जझटठणतथदधननामेवा युक्तानां आदौ प्रयोगोऽस्ति कङगडयरलहानां नास्माद्यत्प्रयोगः। किगिटि दिधिगिणामेवाद्यप्रयोगः। डिमिनाद्यप्रयोजौ कुतुद्रूनामेवाद्यप्रयोगोऽस्ति गणाद्यः। एकारयुक्तोझआद्यः यावत्स्वराविशिष्टस्य आद्यः॥

**उदाहरणे—**

धधिगणेनयोशब्दालयांते कथितौ ध्रुवम् ॥ ८७ ॥

जग। झग। टकु। टङ्। णङ्। तत। था। ददां धळां। नग। ननगि। किट। किड। किट। किरट। गिडि। दिटिकु। दिगि। धिगि। रिद। कुकुं। कुंद। कुंदरिकु। तुत्तुंकुकगु। संथोतो। थोंथय्य॥

॥ इत्यकारादिस्वरयुक्तवर्णाद्युदाहरणम् ॥

॥ अथाकारादिस्वरयुक्तानां प्रत्युदाहरणम् ॥

सक। तक। धि। नक। ङङ्। णङ्। किरदी। थैय्य। किर्रट। धलधल। ताहकिडि। गिडि। धिमि। द्रुगु॥

॥ इति प्रत्युदाहरणम् ॥

एतेषामेव शब्दानां प्रस्तारेण सिता मता ॥

इति पाठकर्णनियमः ॥

॥ अथ वादनप्रकारः ॥

हस्तैर्वक्ष्यमाणैः स्युःपाटवर्णा मृदंगके ॥
येन केनापि हस्तेन हन्यते दक्षिणामुखम ॥ ८८ ॥

अनामिकाकनिष्ठाभ्यां नादस्यापि भवो मतः ॥
तर्विष्ठे तलहस्तेन कर्णिकायां तु विधिर्भवेत् ॥ ८९ ॥
सकंकणै नयीयतांकाग्रेण थोंमतः ॥
कर्णिकाया बहिर्देशे नस्युश्चैव सतां मतः ॥ ९० ॥
एत एव चतुर्वर्णाद्विरावृत्त्या तु संमताः ॥
सोऽपि द्विगुणेनापि वर्णास्तै च सुशोभिताः ॥ ९१ ॥
एत एव चतुर्वर्णा मृदंगे सुखदायकाः ॥
वाद्यं तमेव वर्गाद्यस्तेन वर्गद्वितीयकाः ॥ ९२ ॥
कनिष्ठानामयोर्देशे किः एता केन संमतः ॥
टशब्दः शिखरेणैव धछिठ इति निर्मितः ॥ ९३ ॥

**तेषामेव प्रस्तारः—**

थकि गधिक्किट । थोंकिट । नकिट । तूप्पक्किट । धिद्धिकिट । थों थों किट । नं नाकिट । तन्नापक्किट । किट किट इत्यादि ॥ थक्किट ३ किट किट इत्यादि ॥

कुंशब्दो मुकुरेणैव रेफस्यान्मुष्टिघर्षणात् ॥
विरलेनयताकेन कर्तरी वाद्यते सदा ॥ ९४ ॥
यदा यदा लयतिथोंकरद्वयेन वाद्यते ॥
कर्तरी थोंनिभावात्सर्वे वर्णाः सुसंमताः ॥ ९५ ॥
सदावामेन थों शब्दो दक्षिणस्यानुकुलतः ॥

**उदाहरणम्—**

कुंदरिकु । थरिकुकु । कुंदकुकु कुंदकिट इत्यादि । तक्किडिगिडि । धिक्किड गिडि गिडि । थोंगिडि गिडि गिडि नागिडि गिडि गिडि । जग जगथो दिगि दिगिदां । तगतग तग जव तग ॥

॥ इत्यादिकल्पना ॥

सूच्यैव कर्णिकायां तु स्थित्वा स्थित्वा च वाद्यते ॥

अमी भवंति नयः सप्तानंद इति कीर्तितः ॥ ९६ ॥
यद्यदत्र मया नोक्तं ग्रंथविस्तरभीतितः ॥
तत्सर्वं बुद्धितो ज्ञेयं सूक्ष्मदृष्ट्या विचक्षणैः ॥ ९७ ॥

इति मृदंगवादनप्रकारः ॥

॥ अथ वादुकलक्षणम् ॥

बुद्धिमान् बलवान् धीरो दीर्घबाहुर्दृढासनः ॥
हस्तकेषु प्रगल्भः स्यात् पाटशब्दप्रवर्तकः ॥ ९८ ॥
दशप्राणपरिज्ञानि श्रुतितालविशारदः ॥
वर्जितानुकुल्येन वादने स्याद्विचक्षणः ॥ ९९ ॥

॥ इति वादुकलक्षणम् ॥

दुंदुभिर्धातुजन्यः स्यादेकास्यो द्विस्वरेण च ॥
परितः छिः इत्युक्तेन चर्मणाच्छाद्यते च सः ॥१००॥
चर्मणो दोरकांतेषु योजयित्वा निबध्यते ॥
बहिः प्रत्येकं वादेवकार्यउच्चरतः श्रुतिः ॥ १०१ ॥
द्वितीया स्थूलचर्मणां कुर्यान्मंगश्रुतिं बुधः ॥
अत्र स्थौल्यं च दीर्घत्वं ज्ञेयं सद्भियथेच्छया ॥१०२॥
वाद्यते दुंदुभिः काष्ठद्वयेनैव विचक्षणैः ॥
प्रस्थाने सवितालस्यात्ध्रुवेद्वै मंद्रविवर्जितः ॥ १०३ ॥
उभावेतौतु वाद्येते विवाहादिमहोत्सवे ॥

॥ इति दुंदुभिः ।

धातुजा द्विमुखा भेरी हस्तत्रयेण दीर्घका ॥ १०४ ॥
तन्मुखस्य प्रमाणं तु हस्तमात्रेण संमतम् ॥
समा सा कांस्यपात्रेण संयुता चर्मणा युता ॥ १०५ ॥
दोरकैः कंकणस्थैश्चनिबद्धा सा वितालिका ॥
अस्या नादः स्वकीयानां हृद्युत्सवकरः सदा ॥१०६ ॥
शृण्वतां शत्रुसंघानां हृदयस्फोटकारकः ॥

॥ इति भेरी ॥

धातुजा काष्ठजन्मा वा समा रुंजा सुखप्रदा ॥
दीर्घा सा सप्तमुष्टिः स्यादास्यं तस्या वितास्तिकम्॥ १०७॥
सुकंकणा सुदोरा च मृदुचर्मयुता भवेत् ॥ १०८ ॥
वक्रीकृतसुवंशस्य घर्षणेनैव वाद्यते ॥
वामे दंडप्रहारेण वाद्यते सर्वमंगला ॥ १०९ ॥

॥ इति रुंजा ॥

द्विमुष्टिडमरुर्ज्ञेयो द्विमुखो मध्यसूक्ष्मकः ॥
तदास्यं मुष्टिमानेन युतः सूक्ष्मेण चर्मणा ॥ ११० ॥
तत्र संलग्नसूत्रस्य ग्रंथिभ्यां वाद्यते स चेत् ॥
उमापतिकरे नित्यमिदं वाद्यं सुशोभते ॥ १११ ॥

॥ इति डमरुः ॥

भेरिवत्पटहो ज्ञेयः सार्धहस्तेन दीर्घकः ॥
सस्थूलसूक्ष्मचर्मभ्यामानद्धो द्विविधो मतः ॥ ११२ ॥
स्थुलचर्मावाद्यमेले प्रयुक्तो वाद्यकोविदैः ॥
वादनं तस्य काष्ठेन हस्तेनापि सदा मतम् ॥ ११३ ॥
अन्यो गानोपयोगी स्याद्धस्ताभ्यामेव वाद्यते ॥

॥ इति पटहः ( ढोलक ) इति भाषया ॥

चक्राकारं चक्रवाद्यं विस्तीर्णं हस्तमानतः ॥
स्यादष्टांगुलिगंभीरं युते स्थूलेन चर्मणा ॥ ११४ ॥
कृत्वा हृदि स्थितं वाद्यं हस्ताभ्यां तत्तु वादयेत् ॥
वितस्तिमितदारुभ्यामथवा तत्प्रवादयेत् ॥ ११५ ॥

॥ इति चक्रवाद्यम् ॥

द्विमुखः सूक्ष्ममध्यो यो दीर्घो यः षोडांशगुलैः ॥
स एव हुडुकस्तस्य मुखमष्टांगुलं मतम् ॥ ११६ ॥
रितछिद्रयुक्तौद्वौ कंकणौ चर्मसंयुतौ ॥

अयोस्तस्यतौयुक्तादोरकास्तेषु योजयेत् ॥११७ ॥
दोरकान्तासापित्वा तान् दोरकेनैव वेष्टयेत् (?) ॥
धृत्वा तं वामहस्तेन पीडयेन्नेव वादयेत् ॥ ११८॥
स्वरास्तत्र तु सर्वे स्युः पाटवर्णा यथोचिताः ॥
अयमानद्धराजः स्याद्यतोऽस्मात्स्वरसंभवः ॥ ११९ ॥

॥ इति हुडुक्कः ॥

॥ इत्यानद्धम् ॥

अथ तत्राततानद्धमानद्धंसद्यतस्ततम् ॥
ढक्कारवावहाख्यश्च तयोर्लक्षणमुच्यते ॥ १२० ॥
ढक्का तु द्विमुखा प्रोक्ता दीर्घहस्तप्रमाणतः ॥
अस्या आनद्धदेशस्य प्रमाणं द्वादशांगुलम् ॥ १२१ ॥
मानं तद्भिन्नदेशस्य त्वष्टांगुलमितं तथा ॥
धातुभिन्नाऽत्र तंत्री स्यात्तां चर्मणि नियोजयेत् ॥ १२२ ॥
ग्रंथिं दत्वा बहिर्देशेऽभ्यंतरात्सा बहिःस्थिता ॥
सा धृता वामहस्तेन कत्ते ढक्का तु धारयेत् ॥ १२३ ॥
वामेन कर्षणां कुर्वन्दक्षिणेनैव वादयेत् ॥
भवंत्यत्र स्वराः सर्वे पादा अपि च सर्वथा ॥ १२४ ॥
श्रेष्ठा वाद्येषु ढक्का स्याद्यतोऽस्त्यस्यां क्रियाद्वयम् ॥

॥ इति ढक्का ॥

रवं वहतियद्यस्मात्ततो रवावहः स्मृतः ॥ १२५ ॥
पूर्वोक्तपंचवद्दीर्घः स तु फालः सदारुजः ॥
अत्र देशे ततानद्धः सप्ततंत्री तथा मतः ॥ १२६ ॥
स्फालनंदांशिकेन स्यात्तत्र स्युः पट्टतंतवः ॥ २७ ॥
मस्वरादीन्वदत्याद्याःसप्तस्वरादीन्द्वितीयका ॥
सर्वासामपि तंत्रीणां मपमेव क्रमो भवेत् ॥ २८ ॥

॥ इति रवावहः ॥

करचक्रं केचिदाहुर्दशांगुलप्रमाणतः ॥
चतुरंगुलमानेन गांभीर्यं तस्य संमतम् ॥
पीडयेद्वामहस्तेन दक्षिणेनैव वादयेत् ॥ २९ ॥

॥ इति करचक्रम् ॥

बहुशः संति वाद्यानि कल्पनीयानि बुद्धितः ॥
मया नोक्तानि सर्वाणि ग्रंथविस्तरभीतितः ॥ ३० ॥

॥ इत्यानद्धततानद्धवाद्यानि ॥

अथ वक्ष्यामि सुषिरं तद्भेदाः स्युरनेकधा ॥
सुनादी मुरली पावा श्रृंगो नागसरस्तथा ॥ ३१ ॥
कहली मुखवीणा च वक्री तुंदकिनी परा ॥
चंगुः शंखः पत्रिका च स्वरसागर इत्यपि ॥ ३२ ॥
धत्तुरीकुसुमाकारो दीर्घो हस्तप्रमाणतः ॥
रक्तचंदनसंजातः सुनादी सुषिरांतरः ॥ ३३ ॥
बदरीबीजतुल्यानि तच्छिद्राण्यर्धमानतः ॥
अंगुष्ठव्यवधानेन कुर्यादष्टौ तु तानि च ॥ ३४ ॥
देवनालं मुखे दद्याच्चतुरंगुलमानतः ॥
दद्याद्यंत्रं तदग्रे च दंतजं वापि काष्ठजम् ॥ ३५ ॥
कलशं देवनालस्य छत्रे तं योजयेद्बुधः ॥
मुखे तमेव निक्षिप्य तस्मिन्वायुं प्रपूरयेत् ॥ ३६ ॥
अंगुलीर्वामहस्तस्य प्रदद्यात्त्रिस्वरादिषु ॥
तथैव दक्षिणांगुल्यः स्थापनीयाश्च मादिषु ॥ ३७ ॥
निषादतो रिपर्यंतमंगुलीनां स्थितिर्भवेत् ॥
अनानाया दक्षिणस्योद्घाटनेनैव रिर्भवेत् ॥ ३८ ॥
मध्यमोद्घाटनेनैव संभवो रिस्वरस्य च ॥
तर्जन्योद्घाटनेनैव जायते मध्यमस्वरः ॥ ३९ ॥
अपरस्यापि वामाया उद्घाटनेनैव यो भवेत् ॥

संभूतिर्धैवतस्याथ मध्यमोद्घाटनादपि ॥ ४० ॥
निषादस्यापि संभूतिस्तर्जन्योद्घाटनेन च ॥
यस्मिन्रंध्रे त्वधिकं तनुते दूरतोऽङ्गुलिः ॥ ४१ ॥
नीतायां दूरतोऽगुल्यां न्यूनताऽपि यदा भवेत् ॥
तदा तत्पूर्वरंध्रेऽपि संबंधः शिथिलो भवेत् ॥ ४२ ॥

॥ इति सुनादी ॥

पक्वसूक्ष्मसुवंशेन मुरली सरलेन च ॥
तर्जनीव्यवधानेन तस्यां छिद्राणि पूर्ववत् ॥ ४३ ॥
रंध्रे तद्वायुयोगार्थं शिरोदेशादधो भवेत् ॥
गोधूमपरिमाणेन वादनं पूर्ववन्मतम् ॥ ४४ ॥
नासिकाद्वारतो वायुपूरणं च्यवनाद्भवेत् ॥ ४५ ॥

॥ इति मुरली ॥

विरलांगुष्ठमानेन पावा स्यान्मुरलीसमः ॥

॥ इति पावा ॥

श्रृंगाकारेण श्रृंगं स्यान्माहिषस्यैव धातुजम् ॥
तस्यास्यमोष्ठदेशे तु स्वरान्नियुज्य नादयेत् ॥ ४६ ॥
स्वरैरुग्रतरैः कृत्वा रणसिंगाभिधा मता ॥
कंठोद्भवाः स्वरा एव श्रृंगे तस्मिन्फलंति हि ॥४७॥

॥ इति श्रृंगम् ॥

अथ नागसरे वाद्ये लंबशरीरके स्मृतम् (?) ॥
सजीवदेवनालेन संयुतं मुरलीद्वयम् ॥ ४८ ॥
तत्रैव तलदेशेऽधःस्तद्वयं योजयेद्बुधः ॥
मुखे निक्षिप्य तुंबाग्रं वायुभ्राक्तया च पूरयेत् ॥ ४९ ॥

॥ इति नागसरः ॥

चतुर्हस्तप्रमाणेन कहली धातुसंभवा ॥
धत्तूरकुसुमाकारा वाद्यते महतां गृहे ॥ ५० ॥

प्रस्थाने च प्रवेशे च नादोऽस्याः शुभदायकः ॥
स्वराणां समुदायोऽपि विरलः कंठसंभवः ॥ ५१ ॥

॥ इति कहली ॥

या जाता देवतालेन भुजपत्रसमायुजा ॥
वितस्तिपरिमाणेन मुखवीणा च सा भवेत् ॥ ५२ ॥
सर्वे कंठोद्भवा अत्र फूत्कारेण भवंति हि ॥ ५३ ॥

॥ इति मुखवीणा ॥

हस्तत्रयप्रमाणेन या सा वक्री सुखप्रदा ॥
मध्यदेशे त्रिरावृत्त्या सर्पयोगेन शोभिता ॥ ५४ ॥
तारकस्थाः स्वरा अस्याः सर्वदा संभवंति हि ॥

॥ इति वक्री ॥

तथा तुंदकिनी लंबा सप्तस्वरसमायुता ॥ ५५ ॥

॥ इति तुंदकिनी ॥

चंगुस्त्रिशूलवज्ज्ञेयो लोहजो मध्यसूक्ष्मकः ॥
चतुरंगुलमानेन लंबत्वं पार्श्वदेशयोः ॥ ५६ ॥
मध्यस्थितेऽपि लंबत्वं पंचांगुलप्रमाणतः ॥
अधिकस्य बहिर्देशे परामृत्तिस्तु संमता ॥ ५७ ॥
न्यूनाधिक्यं स्वरे कुर्यान्मधूच्छिष्टेन बुद्धिमान् ॥
तं धृत्वादंतपंक्तिभ्यां वादयेन्मध्यगं पुनः ॥ ५८ ॥
पादवर्णात्वदत्तेव तदग्रे स्फालमो न च ( ? ) ॥

इति चंगुः ॥

॥ ततः सुषिरम् ॥

शंखोवाद्योपयोगी स्याद्यद्गर्भो द्वादशांगुलः ॥ ५९ ॥
द्वितीयं वदनं कुर्याद्बादरीबीजमानतः ॥
कलशं धातुसूक्ष्मं तु तदास्ये योजयेद्बुधः ॥ ६० ॥
कलशं तं मुखे धृत्वा फूत्कारेणैव वादयेत् ॥

पाटवर्णाः स्वरे युक्ता भवंति हि यथोचिताः ॥ ६१ ॥

इति शंखः ॥

पत्रिका यावनाली या लंबा सार्धद्वयांगुला ॥
विस्तीर्णांगुलिमानेन पत्रिका सा मनोहरा ॥ ६२ ॥
अथवा कलिवृक्षत्वग्जाता साऽप्यत्रसंमता ॥
तां मुखे दंतपंक्तिभ्यामंतरे स्थाप्य वादयेत् ॥ ६३ ॥
ईजित्वा धारेण पाटाश्च पक्षिशब्देन संमताः ( ? ) ॥

इति पत्रिका ॥

दारुमयशरीरः स्यात्स्वरसागरसंज्ञकः ॥
हस्तत्रयेण लंबः स्याद्विस्तीर्णोऽपि तदर्धतः ॥ ६४ ॥
चतुरंगुलमानेन गंभीरः संमतः सताम् ॥
तत्रापि दक्षिणे भागे पावाद्वयं च योजयेत् ॥ ६५ ॥
सार्धहस्तप्रमाणेन लंबं तद्व्यंगुलांतरे ॥
सजीवदेवनालेन संयुतं खादिरं पुनः ॥ ६६ ॥
तयोरथादिभूतायां तंत्रीवत्स्वरमाचरेत् ॥
चतुर्विंशतिरंध्राणि शुद्धविकृतसिद्धयोः ॥ ६७ ॥
तेषु पत्नाणि कुर्वीतोद्घाटने पीडितेषु च ॥
दक्षिणेनैव हस्तेन पीडनं चापि संमतम् ॥ ६८ ॥
अच्छिद्रवयनीभ्यां च वामतो वायुपूरणम् ॥ ६९ ॥

इति स्वरसागरः ॥

यद्भिन्नं ततवाद्येन भिन्नमानद्धमाद्यतः ॥
सुषिरादपि भिन्नं यद्वाद्यमानद्धमुच्यते ॥ ७० ॥
बहुधा तस्य भेदस्तु कांस्यतालादिभेदतः ॥
तालश्च झल्लरी घंटा जयघंटा घटोऽपरः ॥ ७१ ॥
जलयंत्रं क्षुद्रघंटा परं कल्पतरुस्ततः ॥
काष्ठतालाख्य इत्येषां लक्षणं कथ्यतेऽधुना ॥ ७२ ॥

षडंगुलप्रमाणेन कांस्यतालः सुवर्तुलः ॥
अंगुलद्वयमानेन भवेद्गंभीरमध्यवान् ॥ ७३ ॥
स्थितितस्ताद्दशो ज्ञेयः सछिद्रो दोरसंयुतः ॥
पलद्वादशकं मानं तुलना चात्र संमता ॥
हस्ताभ्यां तद्द्वयं धृत्वा पाटवर्णांश्च वादयेत् ॥ ७४ ॥

इति तालः ॥

अष्टादशपलैस्तु स्याज्झल्लरी द्वादशांगुला ॥
अंगुलद्वयमानेन मध्यगांभीर्यशोभिता ॥ ७५ ॥
वर्तुला दोरयुक्ता सा हस्तद्वयेन वाद्यते ॥
शिथिलेनैव योगेन वादनं चात्र संमतम् ॥ ७६ ॥

इति झल्लरी ॥

त्रिपलादिपलैः कृत्वा घंटा स्यादन्तरेण च ॥
अंगुलादिप्रमाणेन षड्विंशतिर्दीर्घिका ॥७७॥
तत्तन्मानेन विस्तीर्णा जिव्हा तदनुसरिणी ॥
तस्यास्तु वादने मुष्टिं कुर्यात्स्वेच्छानुसारिणीम् ॥७८॥
याः सर्वतोऽप्यतिस्थूला योग्या सा देवनालयोः ॥
मध्यमादि परीमाणाः संति भाग्यवतां गृहे ॥ ७९ ॥
ततोऽपिन्यूनमानायाः ................ ॥
गजकंठेषु तेनैव पलैरप्यस्य शोभिताः ॥८०॥

इति घंटाः ॥

पलैः षड्भिस्तु संजाता जयघंटा दशांगुला ॥
अस्यामप्यथ तेनैव पलैरथ विधिर्भवेत् ॥ ८१ ॥
विस्तीर्णस्यापि मर्यादा हस्तमानेन संमता ॥
या सर्वापेक्षया स्थूला दुर्गे सा कलसूचनी ॥
ततोऽपि न्यूनमानायाः सर्वत्रापि प्रयोजकाः ॥ ८२ ॥

इति जयघंटा ॥

घटः स एव योग्यः स्यान्मुखं यस्य षडंगुलम् ॥ ८३ ॥
हस्तत्रयेण परीधिस्तलहस्तेन वाद्यते ॥
मुखे तु पार्श्वदेशेऽपि वामहस्तेन वाद्यते ॥ ८४ ॥

॥ इति घटः ॥

द्वाविंशत्या च पात्रैस्तु जलयंत्रं सतां मतम् ॥
पत्रैः कतिपयैर्हीनं यंत्रं तन्मध्यगं भवेत् ॥ ८५ ॥
पात्राणि स्थापनीयानि क्रमादुच्चतराणि च ॥
तेषु च जलयोगेन न्यूनताऽपि भवेद्ध्रुवम् ॥ ८६ ॥
अन्यवाद्यस्वराञ्शृण्वन् कुर्यान्मेलं च बुद्धिमान् ॥
वितस्तिमानकांडाभ्यां वादनीयं विचक्षणैः ॥ ८७ ॥
स्फालनं संमतं तत्र वारिमिश्रितमस्तके ॥ ८८ ॥

इति जलयंत्रम् ॥

फलैरामलकैस्तुल्याः क्षुद्रघंटाः सतां मताः ॥
ताम्राः कांस्यास्तथा रौप्याः सौवर्णा अपि संमताः॥८९॥
अंगुष्ठस्य नखाकारं वदनं तत्र संमतम् ॥
अंतर्लोहकणं तेन मार्गेनैव प्रवेशयेत् ॥ ९० ॥
माला तासां तुरंगस्य कंठे स्थित्वा विराजते ॥
अन्याश्च बदरीबीजतुल्या अपि समीरिताः ॥ ९१ ॥
क्रीडतां बालकानां च पादयोगेन शोभिताः ॥
ततोऽपि स्वल्पमानेन प्रशस्ता नर्तने पुनः ॥ ९२ ॥

इति क्षुद्रघंटाः ॥

दंडे च स्वरसंख्याका घंटाः संयुज्य वादयेत् ॥
जित्वा मुष्टिविहीनास्ताः कुर्याद्यत्नेन बुद्धिमान् ॥९३॥

इति कल्पतरुः ॥

संयोगे च मृदंगे च काष्ठतालाः सतां मताः ॥
प्रमाणं तत्र लंबत्वमेकाधिकदशांगुलम् ॥ ९४ ॥

पलेन शिथिलं धृत्वा वादनं चलनादपि ॥ ९५ ॥

इति काष्ठतालः ॥ इति घनवाद्यानि ॥

देशांतरीयवाद्येषु प्रकारोऽयं भवेद्यतः ॥
संति तत्र स्वरास्तालमदुक्तान्येव तान्यपि ॥ ९६ ॥
सुषिरे देवता वायुर्वने ताभ्योऽपि देवता ॥

इति चतुर्विधवाद्यानि ॥

वाद्ये वाद्ये पृथक् पाटास्तत्तत्स्वरूपयोगतः ॥
ते पाटा अपि कथ्यंते पूर्वाचार्यैर्यथोदिताः ॥ ९७ ॥
यावत्पाटाश्च तंत्रीषु भवंत्येव न संशयः ॥
रेफयुक्तास्तथा पाटा धनुर्वाद्येन संमताः ॥ ९८ ॥
पाटाः सर्वे मृदंगे तु विना नैत्र्ये न दुंदुभौ ॥
भेर्यां तु केवला घोषा मुख्या इति समीरिताः ॥९९॥
रुजायां दुर्गशब्दस्तु वारंवारं सुखाय च ॥
तिरयोटुगशब्दैक्य उमरावेव शोभते (?) ॥ २०० ॥
पटहः सर्वपाटः स्याच्चक्रं निरिपसंयुतः ॥
झेंजगतगशब्देन हुडुक्कौ पसयोगतः ॥१॥
ढक्का च सर्वदारम्यात्तथैव च सुखावहा ॥
वाद्यं तत्करचक्राख्यं सदानैत्र्येन शोभितम् ॥ २ ॥
यावत्सुषिरवाद्येषु सर्वे पाटाः सतां मताः ॥
मुरली रिफयुक्तेन विना पाटेन संयुता ॥ ३ ॥
शंखे सानुचराः पाटाः प्रायशः सुखदायिनः ॥
घनेषु घटवाद्ये च जलयंत्रे तथैव च ॥ ॥४॥
काष्ठताले च ताले च सर्वे पाटाः सतां मताः ॥
अन्यानि नादयुक्तानि तालयुक्तानि केवलम् ॥ ५ ॥
तत्र घंटा विताला स्यात्केवलं नादसंयुता ॥
इति सर्वेषु वाद्येषु पाटानां च विनिर्णयः ॥ ६ ॥

नानाविधश्रूयमाणौ किंकारणलयंगतौ (?) ॥
दृष्टमन्यत्र कार्येषु त्रैविध्यं कारणं जनैः ॥७॥
सत्यं जन्यपदार्थेषु त्रैविध्यं कारणं भवेत् ॥
अनादिनित्यशब्दे तु कारणं त्रिविधं कुतः ॥ ८ ॥
तत्तदुपाधिभेदेन श्रूयते स ह्यनेकधा ॥
शब्देऽनादित्वनित्यत्वभावौ द्वौ तु कथं भवेत् ॥९॥
अणुत्वे श्रवणाभावो विभुत्वे गमनं कुतः ॥
श्रवणं दूरतो यस्य यतः सिद्धः स मध्यमः ॥ १० ॥
वीणाभेर्यादिसंजातो योऽसौ शब्दस्तु मध्यमः ॥
अनिलानलयोगेन गात्रे मध्यमसंभवः ॥ ११ ॥
अनिलाकाशयोगेन स यंत्रेऽपि प्रजायते ॥
निरुद्धश्चालितः शब्दः कर्णमायाति पूर्ववत् ॥ १२ ॥
दर्पणादवरुद्धं तद्यथाऽऽस्यं चक्षुरिंद्रियम् ॥
गतीरथ निरुद्धस्य दीपप्रभेव संमता ॥ १३ ॥
शब्दांतरनिरोधे तु यः शब्दः श्रूयते जनैः ॥
विभुः स एव नित्यश्च स एवानादिरित्यपि ॥ १४ ॥

॥ इति शब्दानादित्वादिविचारः ॥

पूर्वं सम्यक्प्रकारेण गात्रेणैव श्रुतस्य च ॥ १५ ॥
तस्य गीतास्ययंत्रेषु स्वैररनुमितिर्भवेत् ॥
यंत्रे यद्यक्षरोत्पत्तिर्बोधः स्यादश्रुतस्य च ॥ १६ ॥

॥ इति नादनिर्णयः ॥

॥ इति श्री संगीतपारिजाते वाद्याध्यायः ॥

अथ तालं प्रवक्ष्यामि कालरूपं जगद्धरम् ॥
जनयंतं सुखं गीते वाद्ये नृत्ये विशेषतः ॥ १ ॥
उत्पत्त्यादित्रयं लोके येन तालेन जायते ॥
कीटकादिपशूनां च तालेनैव गतिर्भवेत् ॥ २ ॥

यानि कानि च कर्माणि लोके तालाश्रितानि च ॥
आदित्यादिग्रहाणां च तालेनैव गतिर्भवेत् ॥ ३ ॥
ब्रह्मकल्पेऽपि तालेन यतः कालवशं गतः ॥
कालः क्रियापरिच्छिन्नस्तालशब्देन भण्यते ॥ ४ ॥
ततः प्रतिष्ठितं सर्वं ताले काले यतः स्मृतः ॥
कालो मार्गः क्रियांगानि ग्रहो जातिः कलालयः ॥
यतिः प्रस्तारकश्चेति तालप्राणा दश स्मृताः ॥ ५ ॥
आक्षणात्कालपर्यंतं काललक्षणमुच्यते ॥
पद्मपत्रशतैकैकच्छेदकालः क्षणो भवेत् ॥ ६ ॥
लवस्तस्मादष्टगुणः काष्ठाऽप्यष्टगुणा लवात् ॥
निमेषोऽस्त्यस्याष्टगुणस्तस्मादष्टगुणा कला ॥ ७ ॥
त्रुटिः कलाद्वयेन स्यादणुः स्यात्तद्द्वयेन तु ॥
द्रुतश्चाणुद्वयेन स्यात्तद्द्वयेन लघुर्भवेत् ॥ ८ ॥
गुरुर्लघुद्वयेनैव प्लुतो लघुत्रयेण च ॥
दशभिश्च प्लुतैरेव पलकालोऽभिधीयते ॥ ९ ॥
पलानां षष्ट्याघटिकास्तासां षष्ट्या दिनं स्मृतत् ॥
त्रिंशद्भिर्दिवसैर्मासो मासैर्द्वादशभिः शरत् ॥ १० ॥
पुराणोक्तक्रमेणैव शरद्भिर्युगकल्पना ॥
युगानां च सहस्रेण ब्रह्मणो दिनमुच्यते ॥ ११ ॥
तेनैवात्र प्रमाणेन ज्ञेयो मासो हि वत्सरः ॥
वत्सरैश्च शतैरेव बाह्यकल्पोऽभिधीयते ॥ १२ ॥

॥ इति काललक्षणम् ॥

अथ मार्गाश्च चत्वारो ध्रुवश्चित्रश्च वार्तिकः ॥
दक्षिणश्चेति तत्राऽऽद्यौ ध्रुवे मात्राः कला भवेत् ॥१३॥
अन्येषु द्वे चतस्रोऽष्टौ क्रमान्मात्राः कला भवेत् ॥१४॥

॥ इति मार्गाः ॥

तेषूच्यते क्रिया द्वेधा निःशब्दा शब्दसंयुता ॥
निःशब्दा सा चतुर्धा स्यादावापादिप्रभेदतः ॥ १५ ॥
आवापः श्चाथ निष्कामो विक्षेपश्च प्रवेशकः ॥
आवापो दक्षिणे पार्श्वे पताकाधस्तलेन च ॥ १६ ॥

इत्यावापः ॥

उत्तानेन प्रकारेण वामे निष्कामको भवेत् ॥

इति निष्कामः ॥

ऊर्ध्वंगतपताकेन विक्षेपोऽधस्तलेन च ॥ १७ ॥

इति विक्षेपः ॥

उरौ देशे पताकः स्यात्कुंचनेन प्रवेशकः ॥

इति प्रवेशकः ॥ इति निःशब्दक्रियाः ॥

स शब्दा अपि चत्वारो ध्रुवः शंपा तथैव च ॥
तालश्च सन्निपाताख्यस्तेषां लक्ष्म च कथ्यते ॥ १८ ॥
ध्रुवो हस्तस्य पातः स्याच्छोटिकाः शब्दपूर्वकाः ॥
शंपा दक्षिणहस्ते तु पदा वामेन ताडनम् ॥ १९ ॥

इति ध्रुवशंपे ॥

ताडनं दक्षिणेनैव ताले वामे करे पुनः ॥ २० ॥

इति तालः ॥

उभयोश्च समायोगे सन्निपातोऽभिधीयते ॥

इति सन्निपातः ॥ इति क्रिया ॥

सप्तांगानि क्रमात्ताले ज्ञातव्यानि समं बुधैः ॥ २१ ॥
अणुद्रुतोद्रुतश्चेति विरामद्रुतसंज्ञकः ॥
लघुर्लघुविरामाख्यो गुरुः प्लुत इति स्मृतः ॥ २२ ॥
नामांतराणि कथ्यंते तदंगानां च सर्वशः ॥
अणुर्द्रुतश्चार्धचंद्रः करजश्चार्धबिंदुकः ॥ २३ ॥

अर्धद्रुतश्चाणुसंज्ञश्चांकुशाख्यो धनुस्तथा ॥
इमानि योगरूढानि नामानि कथितान्यणोः ॥ २४ ॥
तालानां लक्षणे मेरौ नाम्नां कार्यं भविष्यति ॥
बिंदुर्बिंदुककं शून्यं दोद्रुतश्चार्धमात्रिकः ॥ २५ ॥
सुवृत्तं च तथा काशं वलयः कूप उत्तमः ॥
आकाशे यानि नामानि द्रुते तान्यप्यनुक्रमात् ॥२६॥
विरामद्रुतसंज्ञः स्यादविरामो विरामकः ॥
इति यानि च नामानि सार्धद्रुते मतान्यपि ॥ २७ ॥
मात्राक्षरविभुर्बाणो ह्रस्वो लः सरलः शरः ॥
मात्रिको दंडनामा स्यादिति संज्ञा लघौ मता ॥ २८ ॥
त्रिद्रुतः सार्धमात्रेति लविरामेऽभिधाद्वयम् ॥
दीर्घो वक्रो विमात्रः स्यात्पूज्यो गमुगुरुस्ततः ॥ २९ ॥
गुरोश्च यानि नामानि गुरुत्वात्तान्यपि ध्रुवम् ॥
त्रिमात्रः समजः श्रृंगी प्लुतो दीप्तः पशोः शिखा ॥३०॥
अंगानां लेखनस्यापि प्रकारः कथ्यतेऽधुना ॥
अणुर्द्रुतोऽर्धचंद्रे च वलये च द्रुतो मतः ॥ ३१ ॥
द्रुतः शिखासमायुक्तो दविरामोऽभिधीयते ॥
दंडाकारो लघुर्ज्ञेयो लविरामः शिखी लघुः ॥ ३२ ॥
गुरुर्वक्री त्रिरावृत्या सशिखी च प्लुतः स वै ॥
देवताऽणुर्द्रुते चाऽऽयुर्वरुणः स्याद्द्रुते पुनः ॥ ३३ ॥
विरामाख्यो द्रुते रुद्रो लगयोर्देवता हरिः ॥
लविरामे प्लुताख्येऽपि देवता च प्रजापतिः ॥ ३४ ॥

॥ इत्यंगानि देवतालक्षणे ॥

सर्वेषु परसेषु स्तोऽणुद्रुतद्रुतसंज्ञकौ ॥
भयानकेऽद्भुते वीरे तथा रौद्रे रसे पुनः ॥ ३५ ॥
एतेषु दविरामः स्याल्लघुः श्रृंगारके रसे ॥

लविरामोऽपि शृंगारो गुरुः शृंगारहास्ययोः ॥ ३६ ॥
करुणायां गयौ प्रोक्ताविर्त्यंगानि रसेषु च ॥
॥ इत्यंगानि ॥
ग्रहास्तत्र च चत्वारस्ते समादिप्रभेदतः ॥ ३७ ॥
समग्रहस्तथातीतो नागतश्च ग्रहस्तथा ॥
विषमग्रह इत्येषां कथ्यंते लक्षणानि च ॥ ३८ ॥
गीतस्य यदि तालस्य प्रारंभस्तोककालकः ॥
समग्रहः स एव स्याद्गीतादौ सुखदायकः ॥ ३९ ॥
गीतेऽतीते त्वतीतः स्यात्तालेऽतीते त्वनागतः ॥
विषमेणैव कालेन विषमग्रह उच्यते ॥ ४० ॥
अथवा—
समस्तु समतालः स्यादतीतः स्याद्धि तालकः ॥
अनागतोऽनुतालः स्याद्विषमः प्रतितालकः ॥ ४१ ॥
अनागतोंऽगविश्रांते खलरावः स कथ्यते ॥ (?)
॥ इत्यल्पविशिष्टग्रहाः ॥
जातयोऽष्टौ लघौ संति त्वेकादिवर्णसंभवाः ॥ ४२ ॥
एकाकी पक्षिणी त्र्यस्त्रश्चतस्त्रः खंडसंज्ञकः ॥
वृत्तुर्मिश्रश्च संकीर्ण इति नामभिरीरिताः ॥ ४३ ॥
यथा कयाऽपि जात्या च लघुकालः स एव हि ॥
लघौ स्यात्केवलं घातो गुरौ घातश्च क्षेपकः ॥ ४४ ॥
घातश्च भ्रमणक्षेप इति त्रितयकं प्लुते ॥
अणुद्रुतादिकालाश्च कथ्यंते पाटवर्णतः ॥ ४५ ॥
॥ इति जातयः ॥
चतुर्विधेषु वाद्येषु कला अष्टौ समीरिताः ॥
ध्रुवका च तथा कृष्णा सर्पिणी पद्मिनी परा ॥ ४६ ॥
अथवा वामहस्तस्य घातेनापि सतां मता ॥

आवपंक्तिमयात्कृष्णा निष्कामेणैव सर्पिणी (?) ॥४७॥
अपीगतपताकेन पद्मिनी लोकविश्रुता ॥
साऽवक्षिप्ताऽपताकाऽऽस्यकंपना देवसंभवा ॥ ४८ ॥
विसर्जनी पताकेन बहिर्देशे विसर्जिता ॥
करस्य प्रपतनात्पताका तूर्ध्वगामिनी ॥ ५० ॥

॥ इति कला ॥

क्रियानंतरविश्रांतिर्लयः सन्त्रिविधो मतः ॥
तत्तद्विरामकालेन द्रुतमध्यविलंबितः ॥ ५१ ॥

॥ इति लयः ॥

लयप्रवृत्तिनियमो यतिरित्युच्यते बुधैः ॥
समाश्रोजोगताश्चान्या मृदंगा च प्रकीर्तिता ॥ ५२ ॥
पिपीलिका च गोपुच्छा यतयः पंचधा स्मृताः ॥
आदिमध्यावसानेषु लयैकत्वे समा त्रिधा ॥ ५३ ॥

॥ इति समा ॥

स्रोतोगता द्रुतारंभा तत्समाप्तौ च मध्यमा ॥
अथवा मध्यमारंभा विलंबिताऽपि संमता ॥ ५४ ॥

॥ इति स्रोतोगता ॥

द्रुताद्यंता मध्यमध्या मृदंगाख्या सतां मता ॥
अथवाऽऽद्यंतयोर्मध्यगतिमध्ये विलंबिता ॥ ५५ ॥

॥ इति मृदंगा ॥

अस्यास्तु वैपरीत्येन पिपीलिकायतिर्मता ॥

॥ इति पिपीलिका ॥

मध्यारंभा विलंबांता गोपुच्छा तु यतिर्मता ॥ ५६ ॥

॥ इति गोपुच्छा ॥ इति यतिः ॥

तालस्यांगैकतां कृत्वा आद्याद्यरूपं लिखेद्बुधः ॥
अंगानि दाक्षिणात्यानि यथोपरि तथा ब्रुवे ॥ ५७ ॥

लेखनादरशिष्टं यद्वामं तत्पूरयेद्बुधः ॥
प्लुतस्याधो गुरुर्लेख्यो लविरामो गुरोरधः ॥ ५८ ॥
लघुः स्याल्लविरामाच्च दविरामो लघोरपि ॥
दविरामो द्रुतो लेख्यो द्रुतादणुः सदा भवेत् ॥ ५९ ॥
प्रस्तारो सुवत एव स्याद्यतोऽग्रे भागशून्यता ॥
द्रष्टुं तालगतानानां प्रसारः कथितो मया ॥ ६० ॥
विज्ञातुं तद्गतां संख्यां संख्यासंततिरुच्यते ॥
एकाणौरकभेदः स्याद्द्वयोर्द्वावेव कीर्तितौ ॥ ६१ ॥
त्रयाणामपि चत्वारो लघोरष्टौ भिदा मताः ॥
अंत्योपांत्यां तृतीयाणां तुर्यात्षष्ठाष्टमास्तथा ॥ ६२ ॥
द्वादशेति सप्तांकौ संख्या सा तु सतां मता ॥
षष्ठादीनामभावे तु तत्तत्पूर्वोंऽकसंग्रहः ॥ ६३ ॥
।१।२।४।८।१५।३०।५८।११४।२२२।४३४।८४७॥
१६५६।३२३३।२६३॥१६।१२३६।२४०८७ ॥
तत्तदंकाभिधा ज्ञेया अंकैरतैश्च सप्तभिः ॥

इति संख्याः ॥

रूपं प्रस्तारगं बोद्धुं तन्नष्टं कथ्यतेऽधुना ॥ ६४ ॥
ईप्सितस्य च तालस्य संख्यापंक्तिं लिखेद्बुधः ॥
ईदृक्संख्यात्मकं रूपं कीदृशं तद्भवेद्वद ॥ ६५ ॥
प्रश्नांकपात इत्वाऽन्ये शेषे पूर्वांश्च पातयेत् ॥
अपतनादणुः सत्यो द्रुतः पाताद्भवेद्ध्रुवम् ॥ ६६ ॥
दविरामो द्वयोर्याता त्रयाणां पातने लघुः ॥
अ एष हेतूत्तरांके भवन्त्येते त्रयः सदा ॥ ६७ ॥
पूर्वोत्तराचरावहेतू गृहीत्वा पतनं यदा ( ? ) ॥
चतुर्णां लविरामस्तु तदा प्रोक्तो विचक्षणैः ॥ ६८ ॥
लविरामस्य हेतोश्च तृतीये पतने गुरुः ॥

गुरुहेतोस्तृतीयस्य पतनेन प्लुतो भवेत् ॥ ६९ ॥
त्र्यहे त्वंकत्रयेणैव पूर्वेष्टांतस्यतु ध्रुवम् ॥
इति नष्टं ॥
नष्टोऽयं पतिता अंका अंत्येनानेन पातयेत् ॥ ७० ॥
तस्मिन्नप्यवशिष्टोंऽक उद्दिष्टस्य मितिर्भवेत् ॥
इत्युद्दिष्टं ॥
खंडप्रस्तारसिद्ध्यर्थं कथ्यंते सप्त मेरवः ॥ ७१ ॥
ते च सप्तांगसंज्ञास्युस्तल्लक्षणमथोच्यते ॥
पंक्तिः कार्येष्टतालस्य ह्यणुसंमितकोष्ठका ॥ ७२ ॥
उपर्युपरिपंक्तिः स्याद्विना एकैककोष्ठतः ॥
आद्याद्यकोष्ठ एकांकयुक्तं स्यात्सर्वपंक्तिषु ॥ ७३ ॥
एकादिकांकयुक्तः स्यात्क्रमात्सर्वं द्वितीयकः ॥
अंत्यादीनां च सप्तानामंकानां योगमाचरेत् ॥ ७४ ॥
अणुमेरोरधः पंक्तेः कोष्ठे त्वंत्यस्य वर्जनम् ॥
अस्मिन्प्रत्यक्षतुर्यादेरंकस्यापि निषेधता ॥ ७५ ॥
प्रतिनिधिस्तु तुर्यादेरंकस्यैव सतां मतः ॥
यस्य पंक्तावधस्तस्यामभावः कोष्टके पुनः ॥ ७६ ॥
चातुर्थे परिपंक्तौ तु तस्यैवाधस्तनं लिखेत् ॥
ऊर्ध्वपंक्तिस्थकोष्ठानामंकानां कृत्यमुच्यते ॥ ७७ ॥
मेरुर्यन्नामकस्तस्य त्वभावश्चाद्यकोष्टकः ॥
द्वितीयादिककोष्ठैस्तु वृद्धिरेकोत्तरे भवेत् ॥ ७८ ॥
एतैः कोष्ठगतैरंकैः प्रस्तारस्य मितिर्भवेत् ॥ ७९ ॥
इत्यणुमेरुः
द्रुतमेरावधः पंक्तेः परा न्यूनैककोष्ठतः ॥
द्विद्विकोष्ठोनिता अन्याः पूर्वतोऽथांकयोजना ॥ ८० ॥
आद्याद्यकोष्ठ एकांकयुक्तं स्यात्सर्वपंक्तिषु ॥

अथ पंक्तिवेधस्तस्य सप्तांकयोगमाचरेत् ॥ ८१ ॥
यतस्तुर्यांकयोगः स्यात्ततोपांत्यस्य वर्जनम् ॥
षष्ठाद्यंकोपदानं स्यात्तत्तत्पूर्वांकसंग्रहः ॥ ८२ ॥
उपर्युपरिपंक्तौ तु प्रतिनिर्धनिशोधिताः ॥
यदुक्तमर्धचांद्रे तु अत्रतत्रोच्यते मया ॥ ८१ ॥

इति द्रुतमेरुः ॥

विरामद्रुतमेरौ तु परा कोष्ठद्वयोनिता ॥
ततस्तूर्ध्वं त्रिभिर्न्यूना एकमाद्याद्यके लिखेत् ॥ ८४ ॥
अधः पंक्तौ द्वितीयस्तु द्वयांकानेव संमतः ॥
तृतीयादौ तृतीयेन विना सप्तांकमाचरेत् ॥ ८५ ॥

इति विरामद्रुतमेरुः ॥

लघुमेरौ त्रिभिः कोष्ठैः परा न्यूना भवेद्विदुः ॥
ततस्तूर्ध्वं चतुर्भिश्च न्यूना अपि सतां मताः ॥ ८६ ॥
आशायकोषु एकांक युक्तः स्यात्सर्वपंक्तिषु ॥ ( ? )
अधस्तन्या द्वितीयस्तु ह्यंकवानेव संमतः ॥ ८७ ॥
अस्यामेव तृतीयोऽपि चतुरंकेन संयुतः ॥
अत्र सप्तांकयोगस्तु तुर्यांकेन विना भवेत् ॥ ८८ ॥

इति लघुमेरुः ॥

विरामाख्यमेरौ तु पंचकोष्ठोनिताऽपरा ॥
ततस्तूर्ध्वं षडूना स्यात्तिपमाद्युत्तरोत्तरम् ॥ ८९ ॥
पंचस्वत्र तु कोष्ठेषु लेख्या संख्यांकसंततिः ॥
षष्ठांकेन विना चात्र योगं सप्तांगमाचरेत् ॥ ९० ॥
आद्याद्यंके लिखेदेवं ध्रुवं सर्वत्र पंक्तिषु ॥

इति लविराममेरुः ॥

गुरुमेरावधः पंक्तेः सप्तकोष्ठोनिताऽपरा ॥
अष्टकाष्ठोनिता अन्या एकमाद्याद्यके लिखेत ॥ ९१

संख्यांकसंततिर्लेख्या ध्रुवं कोष्ठेषु सप्तसु ॥
विना चात्राष्टमांकेन योगं सप्तांकमाचरेत् ॥ ९२ ॥

इति गुरुमेरुः ॥

प्लुतमेरावधः पंक्तेरूनितैकादशाऽपरा ॥
कोष्ठैर्वा दशभिर्न्यूना ततस्तु सर्वपंक्तिषु ॥ ९३ ॥
एकादशेषु कोष्ठेषु लेख्या संख्यांकसंततिः ॥
ततस्तु द्वादशांकेन विना सप्तांकमाचरेत् ॥ ९४ ॥

इति प्लुतमेरुः ॥

षष्ठ्यां द्रुतादिमेरूणां सर्वास्वपि च पंक्तिषु ॥
कोष्ठे गतांककार्यं स्यादर्धचंद्रस्य मेरुवत् ॥ ९५ ॥

| १ | २ | ३२ | ६३ | १३९ | ३०२ | ६ | ५० | |
|---|---|---|---|---|---|---|---|---|

| १ | २ | ४ | ८ | १५ | ३० | ५८ | ११२ | १२० | ४२० |
|---|---|---|---|---|---|---|---|---|---|
| | ८३४ | १६२८ | ३००० | ६१११ | १२०४४ | १३४४६ | | | |

इति प्रस्तारमेरवः ॥

मार्गदेशीयभेदेन तालोऽपि द्विविधो मतः ॥
जातिक्रियाकलामार्गैर्ये युक्ता मार्गसंज्ञकाः ॥ ९६ ॥

| २ | ५ | १२ | २८ |
|---|---|---|---|

नास्ति तेषु विरामांगं तथा न स्तोप्यणुद्रुतौ ॥
चंचत्पुटादयस्तेस्युस्तेषां लक्षणमुच्यते ॥ ९७ ॥

| १ | २ | ४ | ८ | ११ | ३० | ५८ | ११४ | २२२ | ४३४ |
|---|---|---|---|---|---|---|---|---|---|
| | ८४७ | १६५५ | ३२३१ | १३११ | १२३१४ | २४०६८ | | | |

इति प्लुतमेरुः ॥

तयोश्चंचत्पुटे ताले गसौ चाचत्पुटे तथा ॥
षट्पितापुत्रके ताले पपौ ज्ञेयौ लपौ तथा ॥ ९८ ॥
संपर्केष्टाकाताले तु प्लुतो मश्च पुनः पुनः ॥
उद्घटो मगयोर्नैव पंचैते शंभुसंभवाः ॥ ९९ ॥

ऽऽ।ऽऽ चंचत्पुटः ऽ।।ऽ चाचपुटः ॥
षट्पितापुत्रकेषु ऽे।ऽेऽ।ऽे पुत्रकः । ऽेऽऽऽऽे ।
संपकेष्टः ॥ ऽऽऽऽ उद्घटः ।

ध्रुवादिभिः क्रियाभिश्च ताला एते सदा युताः ॥१००॥
तत्तन्मार्गानुसारेण कलायुक्ता भवंति हि ॥
समवर्णोद्भवा जातिर्मार्गतालेषु संमता ॥ १०१ ॥
अथ पाटाश्च कथ्यंते मार्गतालानुसारिणः ॥
उक्तवर्णक्रमेणैव नृत्यगीतानुसारिणः ॥ २ ॥

अथ उदाहरणम्—

तक किणाकु कुजग भुङ णाङ झें, सरिकु ॥
टकु किडि किडि । ढिं ढिं ॥ तथदिधिनन थां ॥

इति ध्रुवमार्गे चंचत्पुटः ॥

तगतगनककुंदरिकु । नकथरि । थरिकुकु ॥ तकथरि । थोंगिण । झेंजगजग ॥ धिमिथरि ॥ ततथरि ॥ थरिथरि । धिमिथरि । नकधिमि । धिमिधिमि । थरिधिमि । धिमिध-धिगिणथों ॥

इति क्रममार्गे चंचत्पुटः ॥

ताधिमि । नतधिमि । धिमिथा धिमिथा । धलांग । त-गतगतग । धलांग । किकिकिरिकि । कुंदरिकि । ततधल। ताहं । ताहं । धिमिता । किटधधि । किणथों । झगतग । तगथों । तगथों । तगथों । किटधिमि किरंट । तगधिः त-

त्था: । धिमिधिमि । तत्था । तत्था । तत्था । थोंगिण । थों । थों । न कधधिगणथों ॥

इति वार्तिकमार्गे चंचत्पुटः ॥

किटकिणाः । किडद्गथों । किडद्ग । किडद्ग । किडद्ग । किडद्गथों । नगनग । जगनगन । नगजग । तगथों । कुकुथरि । थरिकिट ॥

दाधिमि । धिमिधिमि । ततधिमि । ततथरि । थरिथों । तांधिमि । धिकितां । ततधिकि । धिधिताधि । तधितां । तांधिधि । तधिथों थाथै । ततथै तथधिमि । तदिदां । दातदिदितदां । दांधिधिगणथों । अवशिष्टलययोरप्युक्तपाटाक्षराण्येव ॥

इति दक्षिणमार्गे चंचत्पुटः

इतिचंचत्पुटः ॥

अथ चाचत्पुटः ॥

श्री श्री श्री ऽऽ ॥ ॥ ऽऽ इति द्विकलचाचपुटः ॥
एवमत्रापि पाटाः कल्पनीयाः ॥ श्री ऽऽऽऽ ॥ ॥
॥ ऽऽऽऽ इति चंचत्पुटचाचपुटौ ॥ श्री ऽऽऽऽऽऽऽऽ ॥
॥ ऽऽऽऽऽऽऽऽ इत्यष्ट चाचत्पुटाः ॥

॥ अथ षट्पितापुत्रकः ॥

॥ ऽेऽे ॥ ऽेऽेऽेऽे ॥ ऽऽ ॥ द्विकला ॥ श्रीः ऽेऽेऽेऽे ॥
ऽऽऽऽऽऽऽऽ ॥ ॥ ऽेऽेऽेऽे ॥ इति चतुष्कलः ॥
॥श्रीः ऽेऽेऽेऽेऽेऽेऽेऽे ॥ ऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽ ॥ ॥ ॥ ॥
ऽेऽेऽेऽेऽेऽेऽेऽे ॥ इति षट्पितापुत्रकः ॥

॥ अथ संपक्वेष्टः ॥

ऽेऽेऽऽऽऽऽऽऽऽऽेऽे इति द्विकलः श्री ॥ ऽेऽेऽेऽेऽऽऽऽऽ
ऽऽऽऽेऽेऽेऽे ॥ इति चतुष्कलः । ऽेऽेऽेऽेऽेऽेऽेऽेऽऽऽऽऽऽऽऽ

ऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽः

॥ इति दक्षिणमार्गे संपक्वेष्टः ॥

अथ उद्घटः ॥ ऽऽऽऽऽऽ ॥ इति द्विकलः ॥ ऽऽऽऽऽऽ ऽऽऽऽऽऽऽ ॥ इति चतुष्कलः ॥ ऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽऽ॥ ऽऽऽऽऽऽऽऽऽऽऽऽ ॥ ॥

॥ इति दक्षिणमार्गेऽष्टकल उद्घटः ॥

अनेनेव प्रकारेण मार्गताला अनेकधाः ॥ ३ ॥

॥ इति मार्गतालः ॥

॥ अथ देशीतालः ॥

अंगैस्तु वादिभिः सर्वैः केवलं ध्रुवमार्गतः ॥
देशीतालाश्च ते प्रोक्तास्ताललक्षणकोविदैः ॥ ४ ॥

चित्रकः१ कंदुकः२ कंदुकार्याः३ रासाभिधानकः४ ॥
लघुशेखरसंज्ञश्च५ करुणः ६ संनिपातकः ७ ॥ ५ ॥
सर्वतालः८ पंचमश्च९ द्वितीय१० आदितालकः११ ॥
चतुर्थः१२ सप्तमाख्यः स्या१३द्दशमाख्यः१४ परो भवेत् ॥ ६ ॥
निःशंकलीलातालः१५ स्यात्तथा चंद्रकलाभिधः १६ ॥
ब्रह्मताल१७ इडावांश्च१८ चतुस्तालस्तथा परः१९ ॥ ७ ॥
कुंभो२०लक्ष्मीः२१कुंडलानि२२रर्जुनः२३कुत्स२४संज्ञकः॥
रंगतालः२५सन्नितालः २६ सिंहविक्रम २७संज्ञकः ॥ ८ ॥
महासन्नि२८रिति पवित्रो खरो २९ रंगद्योतकः ३० ॥
सिंहविक्रीडितस्तालो३१ तथा कल्याणसंज्ञकः३२ ॥ ९ ॥
चंद्रतालो ३३ लाडतालो ३४ यतिताल ऽऽऽऽऽ ३५ प्रतिः ३६ परः ॥
सम ३७ स्तालः संचपाख्यः ३८ सिंहनादोऽ३९ ष्टतालकः ४० ॥ १० ॥

पृथ्वी कुंडलिकातालः ४१ तथा पातालकुंडली ४२ ॥
इंद्रलोककुंडली च ४३ ब्रह्मांडसंज्ञकोऽपरः ४४ ॥ ११ ॥
अहिभेक४५श्चाहिरावि४६र्हिमाचलः ४७ परो भवेत् वि-
ष्णुतालः ४८ पक्षिराजो ४९ गारुगी ५० झोंबडः ५१
परः ॥ १२ ॥
नीलसौंबः ५२ चक्राख्यो ५३ तिउटंभः ५४ ततःपरम् ॥
स्वर्णमेरुः५५शंखतालः५६संयोग५७श्च त्रिवर्तकः५८॥१३॥
नारायणाख्यः५९श्रीविष्णु६०र्गद्यतालो६१ अनर्तकः ६२ ॥
दर्पणो६३मन्मथ६४श्चापि रतिलील६५स्ततः परम् ॥१४॥
सिंहलीलाख्यतालोऽपि ६६ वीरविक्रमसंज्ञकः ६७ ॥
रंगः६८श्रीरंगः६९प्रसंग७०श्च रसोऽ७१थ भिन्नकः७२
॥ १५ ॥
हंसः सूनु ७३ र्हयलीला ७४ शरभलीला ७५ ततःपरम् ॥
कंदर्पो७६ वर्णभिन्नाख्यः७७कोकिलाप्रियसंज्ञकः ७८॥१६॥
निःशंको ७९ जयतालश्च ८० यूपश्च ८१ रतितालकः ८२॥
विष्णुमतं ८३ चर्चरी च ८४ कंकालो ८५ मल्लसंज्ञकः
८६ ॥ १७ ॥
नंदी ८७ तथाऽनंगतालोऽ ८८ भिनंदाख्य८९स्तथा परः ॥
विषमो ९० टेकिका९१तालो दीपको ९२ नंदन९३स्तथा
॥ १८ ॥
बिंदुमाला ९४ महाचित्रः ९५ परिवर्त९६विवर्त्तकौ९७ ॥
श्रीकीर्तिः ९८ कीर्तितालश्च९९ जयश्री१००र्मकरंदकः१
॥ १९ ॥
हंसश्च१मल्लिकामोदो २ विजयानंदक३स्ततः४ ॥
राजविद्याधरो५ निःसारुकः ६ कुमुदसंज्ञकः ७ ॥ २० ॥

डोंबुलीला ८ नंगतालौ९ रायबंकोलसंज्ञकः १० ॥
प्रतापशेखरस्तालो ११ वसंतो १२ जयदायकः १३ ॥ २१ ॥
चतुर्मुखो १४ मदनाख्यो १५ रम १६ स्तारसंज्ञकः १७ ॥
वीरशीलो १८ चारश्च १९ पार्वतीलोचनस्तथा २० ॥ २२ ॥
लीलातालो २१ जयानंदः २२ करणोपपदा यतिः ॥२३॥
लक्ष्मीशो २४ ललितस्तालो २५ राजनारायणः परः २६ ॥२३॥
ललिताप्रियतालः स्यात् २७ श्रीनंदो २८ जनकस्ततः २९॥
अभंग ३० शेखरौ ३१ तालौ रागवर्धन ३२ धर्नवौ ३३ ॥२४॥
चतुस्तालो ३४ मुकुंदः स्यात् ३५ गजतालो ३६ गजाननः ३७॥
वर्णयति ३८ मृगांकश्च ३९ राजमार्तंडसंज्ञकः ४० ॥२५॥
कलावति ४१ सरस्वत्यौ ४२ कंठाभरणशंकरौ ॥
द्वंद्वो ४३ द्वंद्वश्चित्रपुटो ४४ गौरी ४५ मारस ४६ स्कंद ४७ उत्सवः ४८ ॥ २६ ॥
भग्नो ४९ विलोकितः ५० पद्मो ५१ रंगप्रदीपसंज्ञकः ५२॥
सुदनतिः ५३ सुदेवलो ५४ राजतालो ५५ रति ५६ स्ततिः ५७ ॥ २७ ॥

कुमुदो ५८ मंगतालश्च ५९ तालाः सूडादिकास्तथा ॥
रिछो दंतिमहाव्याघ्रौ तस्करादिग्रहास्तथा ॥ २८ ॥
विजयः कामधेनुश्च पुष्पबाणाख्य इत्यपि ॥ २९ ॥

॥ इत्युद्देशाः ॥

संख्यावाचकशब्देन तालो वाच्यो यदि क्वचित् ॥
तत्संख्या सुसमायुक्ततत्संख्यांकश्च यो भवेत् ॥ ३० ॥
दलैश्च प्लुतेनैव प्रस्तारो यत्रकुत्रचित् ॥
तत्रापि यदि संख्यावांस्तत्संख्यांकः स्वयं भवेत् ॥ ३१ ॥
प्रस्तारस्य क्रमेणैव ताला अप्यमिता मताः ॥
तेषु ये च प्रसिद्धाः स्युस्तेषां लक्षणमुच्यते ॥ ३२ ॥

चित्रतालोंऽकुशेनैव कंदुको बिंदुकेन च ॥
दविरामात्कंदुकार्यां लघो रासोऽपि जायते ॥ ३३ ॥
लघुशेखर इत्याख्यो लविरामः सतां मतः ॥
गुरुणा करुणातालः सन्निपातः प्लुते च ते ॥ ३४ ॥
चित्रादिकेषु तालेषु पाटचित्रादिसप्तसु ॥
तधि.-थो -तग धिग - धिग - थों० ॥

॥ इति चित्रतालः ॥

१ तग. धिगि ० तग ० थों० धिगि ० तग ० थों०

॥ इति कंदुकः ॥

२ तग ० धिगि ० धिरगीत - तकु - नककु - थों -

॥ इति कंदुकार्यः ॥

३ ततधिधिंधिगिनगनगथो ॥ जगननगथो ॥ ततधिमि॥ धिमिथों ॥

॥ इति रासः ॥

४ ततधिमिधिमि ॥ धाधिमिधिमिता ॥ धिमितग । तगनगजनगतगजगरंजगतगन ॥ नगधिमिनग । धधिगणथों ॥

॥ इति लघुशेखरः ॥

कुकुथरि कुकुथरि ऽ तगन ॥ धिगिथोंऽथरिथरिकिटथरिऽकिटथरिकिटथोंऽथाधिमिधिमिकिट ऽततधिमिकिटथाथाततथा ऽततधिगणथोंऽ ॥

॥ इति करणम् ॥

ततधिमिगिनगथोंगा ऽ तगतगतगतग ॥ कुंदरिकुकुंदथो ऽ धिमिकिटथरि । थरिदां । दाथरि ऽ ताहं । कुकुतदि॥ तदिदांऽनकधिमि । तगथों । धिमितगऽदां दां ॥ दांधधिगणथौ ऽ ॥

इति सन्निपातः ।

७ अरावाद्यंगैः सर्वतालः ८ ०८।ऽ ऽ पंचमे णद्रुतौ तथा ००० ॥ ३१ ॥

द्रुताभ्यां च द्वितीयः स्यादस्थवाधगतौ स्थितिः १०

द्वाभ्यां च द्वितो लघुना आदि ०० तुर्येण च द्रुत-००००स्तथा ॥ ३६ ॥

अंकुशौ दविरामौ च यत्रासौ सप्तमः स्मृतः ॥

दविरामोंऽकुशो लश्च यत्रासावष्टमः स्मृतः ॥ ३७ ॥

पाभ्यां निःशंकलीलाख्यः तगणेनापि संयुतः ॥

मश्च प्लुतास्त्रयो यश्चयस्मिन् चंद्रकला हि सा ॥३८॥

लघुर्द्रुतो लघुश्चैव द्रुतद्वंद्वमथो लघुः ॥

द्रुतत्रयं लघुश्चेति ब्रह्मतालेऽवभाषिरे ॥ ३९ ॥

उदाहरणम्-

ततधिमिकिट० धिमिथों तग. तग. धिमितग । नग.धधि० गण० तकथों तथरिकिधिमि० तथरिकि । थरि० थरि० धिमिथरि । कुकु० धधि० गण० थों । १ । कुंदरिकि । कुकु० कुंदरिकि । दां० दाधिमि धिमि० धधि.गण.थों ॥ ३ ॥ झेझक । किण० सगनग । तग. धिमि.तग. तग । नग. धधि. गण थों ॥ ४ ॥

इति ब्रह्मतालः ॥

सुवृत्तलद्रुतदलैरिडावान्सुखदायकः ॥ ४० ॥

उदाहरणम्-

धिमि० किटनग । तग.धिमि० नगथों १ नग.तगधिमि । झग० नग० धिमि । थों २ थरि वगथरि । थरि.नग थरिथों ॥ ३ ॥ किणततकुकु । नकंदां । ० । कुकुथा० थरि. धिमि थरिथा २ था० धधि.गण.थों ३ ॥

## अथ चतुस्तालः ॥

थरि ० नक ० थरिथों ॥

## अथोत्तमः ॥

पंच यत्र स्युरर्धचंद्रो० विरामदः लो० ॥
दो० णु० दविराम०श्च सरलो ॥ बिंदु०सञ्ज्ञकः ॥४२॥
लविरामोऽपि यत्र स्यात्कुंभतालः सर उच्यते ॥

उदाहरणम्—

तग० धिमि० धिमि० नग० धा० त० त० तकुकु त-कुधिमि । तधि. ध. लांग० धलांध । धलांग । तग. धधि-गणथों ॥ थरि० दां० थरि० दा तः तक० त ~ थरिकि-ट ० दांथरि । थो० रा० थोग ० तधिदां । दां० तधिदां थौ २ ॥ २० ॥

## इति कुंभतालः ॥

लक्ष्मीताले द्रुतो बाणो धनुर्द्वद्वं द्रुतस्तथा ॥ ४३ ॥
विरामदौ शरौ द्वौ च दविरामो द्रुतस्तथा ॥
बविरामो लघुः कूपौ लविराम इति क्रमात् ॥ ४४ ॥

उदाहरणम्—

दा० दां० तकुथरि । त ~ त ~ यरि. थरिकुठेतग० दीधिमि । जग० धलां ० जग० धतां ० तगधिमि । ध-धि० गणा. थों० ॥ २१ ॥

## इति लक्ष्मीतालः ॥

दलविरामलैर्देन ललविरामलैस्तथा ॥
कुंडिनाऽर्चिर्दलं सत्या लविरामदविरामलैः ॥ ४५ ॥
तत०थैय्य । थरिकुंदरिकि । विट.कुंदथरि । नगनगधलां । तगधिमि । नग. धिमितग । याथरिधधि । गणा०थै ॥२२॥

## इति कुंडलनाभिः ॥

बिंदुर्बाणो द्रुतो बाणो द्रुतो बाणो द्रुतास्त्रयः ॥
लघुद्रुताश्च चत्वारो लघुः स्याल्लघुतालके ॥ ४७ ॥
लघुद्रुतविरामाभ्यां उच्चतालः प्रकीर्तितः ॥
त्रिभिर्द्रुतैः शरैः पाणिकलपाभ्यां तथा पुनः ॥४८॥
अक्षराभ्यां द्वयोर्जातः सन्निपातः स उच्यते ॥
सिंहविक्रमताले तु२७ गत्रयं लयलागपौ ॥
ऽऽऽ।ऽ।ऽऽ। ॥ ४९ ॥
दत्रयं लद्वयं दश्च ०००।०। बाणोऽद्भुतशरौ द्रुतः ॥
मात्रास्तिस्त्रो ।०।०॥।२८ महासत्रिताले प्रोक्ता वि-
चक्षणैः ॥ ५० ॥
दोर्लो० दौलो ०० । द्रुतश्चापि लद्वयं० ॥यतिरेव च॥
२९ रंगद्योताभिधे ताले ३० मुलागाःऽऽऽ।ऽसुखकारिणः५१
सिंहविक्रीडिते दंडः पगौयौर ३१ पलौ प्लुतः ॥
।ऽऽऽऽऽ।ऽऽ०। बिंदुद्वंद्वं विरामश्च००ॅ धनुर्द्रुतवि-
राम०ॅकः ॥ ५२ ॥
धनुर्द्रुतत्रयं सार्धद्रुतः ◡०००० ३२ कल्याणसंज्ञकम्॥
सुवृत्तो दविरामश्च दत्रयं सरलाः द्रुताः ०००००।० ५३
लत्रयं वलयः सार्धद्रुतः ।।।०ॅ३३ श्चंद्राभिधानके ॥
आद्यंतयोः प्लुतो मध्ये गद्वयं ऽऽऽऽऽ लाडतालके३४ ॥५४॥
आद्यंतयोर्गुरुमध्ये प्लुतौ स्यातां ऽऽऽऽऽ३५ यतौ पुनः ॥
प्रीतौ स्यातां लघुर्बिंदुः ००३६ समे लौ द्वौ विरामकः ॥
००ॅ ३७ ॥ ५५ ॥

॥ इति प्रीतिसमौ तालौ ॥

आकाशश्च त्रयो बाणाः संचयाख्यः सतां मतः ॥
तयलो यो द्रुतो तश्च पलो पगो लघुद्वयम् ॥ ५६ ॥

चत्वारो लाघवोऽशब्दाः ऽऽ।ऽ।ऽ००ऽऽ।ऽ।ऽऽ ॥ ॥ ॥
सिंहनंदाभिधानके ॥ ३८ ॥

तत्तथरिथरिकिटऽनगधिगिथोंगाऽथोंगा । तगधिमिनग-
धिमिधिमितगऽतत्ता । कुकुथरिथरिथरिधिंऽदां० कुंदाकिट
कुंदरिकुऽथरिकुऽजगाधिमि। ताहंताहंततथरिऽतादं । तगधि
मिनगतगसेऽधकिड तत्तकिडतगतागि डधिकिडतत्त । किडत
तागि । धकिडधिकिडधिकिडधकिडधधिगणथों ॥ १ ॥

तथरिकिदिरगिडदांऽतकुथरिदिरगडदांडडुगुडुगुडु। थकु।
तकुथोंऽकुंदकिट। किरिट किरिटऽकिट० कि० थरिककु कि-
रिटऽन कथरि किरिट ऽ दांकिट । दाधिमि दांधिमि किटऽ
किडदगथों ॥ ताहं धिमि किटि नगथों ऽझकुकुकुझकु कि-
णऽ तकुनं । गिणथों थकुथरिन्यगदां धधिगण । थो ॥२॥

जग जग जग जग ऽ तग तगथो ऽ नग तग ॥ गनग
जग जग जग झें ऽ दांधिमि । किट नग तग झगथों ऽदां-
धिमि । तगधळ धळांगऽथों०धिमि । किट नग झगथोंऽतग
नग झगथोंऽदांधिमि । तग तग तग तग थरिकि ठऽठिंठि
दां धिमिकिट ठिं ठिं कुकुठिंठिऽथा धिमि किणकिणऽधळां-
ग धळांग । तदिदांऽ दांथरिऽधधिगणऽथों ॥ ३ ॥

॥ इति सिंहनंदनः ॥

अंगैरणवादिभिः सर्वे लघुनाऽप्यष्टतादिकः ॥३९॥५७॥
तपमालपलावकः प्लुतः पूज्यःऽ शरद्वयम् ॥
ऽऽ ।ऽऽऽऽ।ऽऽऽऽऽ॥
चत्वारो लघवो शब्दश्चत्वारो बिंदुदो लघुः ॥ ५८ ॥
ऽऽऽऽ००००
तपजाः सामजौ नश्च मात्रादीर्घस्तथैव च ॥
ऽऽ।ऽऽऽ॥

चत्वारो लघवो शब्दाः पृथ्वीकुंडलिसंज्ञके ॥४०॥५९॥

उदाहरणम्-

थाधिमिथकुथरिऽनेकदिधिसगथोंऽताहं । थोंथों गिण-किणथोंऽनकधिमिथरिदांऽदांधिमिथरिदांऽथरिथरिदांऽताहं । धादुगुदुगुदुगुदुगुदांडताताहं । किटथरिनगझेंऽतत्तधलध-लधलतधलांडेनककिणकिरिट । ताहं । तत्तथाऽधिधिधिऽ थोंथोंऽनलन । तग.झग० नग० तग० ताहं । ताहं ॥ न ककिणतगथोंऽधिमिधिमितंगथों। ताहं । थरिकु थरिकु थरिकु डताहं। किटथरिदांऽताहं । धाधाधलांगधलांगेडतगधलधलांग धलांगऽताहं । ताहं । ताहं । तथरिकुरिथोंऽता धिमिऽतग धिमिऽ तगधिमि धधिगणऽथोऽ ॥ ४१ ॥

इति पृथ्वीकुंडली ताले ॥

..............................मात्रा श्रृंगी गुरुः शरः ॥

त्रिमात्रो रः प्लुतो दंडः श्रृंगिणौ मगणः प्लुतः ॥६१॥

मस्त्रिमात्रो जयौ भोमौ पौ द्रुतौ च त्रिमात्रिकः ॥

चत्वारो लघवः शब्दाः प्रांते प्रोक्ता मुनीश्वरैः॥ ६२॥

|ऽऽ|ऽऽऽऽऽ | ऽऽऽ .॥ ऽऽ ऽऽ ॥ ऽऽऽ

॥ ऽऽऽ ॥ ॥ ४१ ॥

सलपा मलपा मात्रा गपमाः सामजास्त्रयः ॥

मात्राप्लुतौ च तौ मात्रा पतवाश्च जसौ ततः ॥६३॥

चत्वारो लघवः शब्दा इंद्रलोकाख्यकुंडली

ऽऽऽऽ | ऽऽऽऽऽ ॥ ऽऽऽऽऽऽ ||| ऽऽऽ ऽऽऽ

ऽऽऽऽऽ |||| ऽऽऽ ॥ ४२ ॥

ब्रह्मांडसंज्ञके ताले धनुः स्याद्रलयौ तथा ॥ ६४

दविरामस्त्रयो यत्र चतस्रो मात्रिकास्ततः ॥

षट्त्रिद्रुतास्ततः पूज्या अष्टौ द्वादश श्रृंगिणः ॥६५॥

०००ऽ०ऽ ॥ ॥ ॥ ।ऽ। ।ऽ। ऽऽऽऽऽऽ ऽऽऽऽऽऽ
ऽऽऽऽऽऽऽऽऽऽऽऽऽऽ. ॥ ४२ ॥

त०तकु० धिमि० तकुकु ऽ धलांगे ऽ धलांगे ऽ था-
थैय्य । ततथैय्य । ततधिमि । थरिथों । तकुधाळो तगत-
धळां धिमिथरिकुकु । कुकुथरिकुकु । थरिननगिण । दांधि-
मिथैातगदांनगतगऽथरिकुननगिण ।ऽ। दांदांतगधिमिऽधि-
मिधिमिथोंबिणऽकुंदरिकिकिऽथोंऽकिर्रऽकिटथोंऽनकथरिकि-
ट थोंदांदांकिटथोंऽथाधिमिकिटनगादिगिदांडेतकाकिटाकिटतकु
दिगदिगिदांडेझेंझेंथोंगिणाठिंठिं ऽ किटडिनगझेंतगधिंडेतगतग-
तधिंधिकथों ऽतधिक्ताधिक्धिक्तगतगधिगिनगथों ॥
ततहतताहतताहतताकिहेटं ऽ तहकुतहथों ऽ ठकुठकुठक-
कुकुडेंझेऽ झंझकझेंझें ऽ ठकुधिमिधिमिझेंझेंथरिडतकंकुकुध-
धिगणथोंऽ ॥ ४३ ॥

इति ब्रह्मांडतालः ॥

द्रुतपू ऽ यौ चतुर्वारं अहिमकाभिधानके ॥
०ऽ०ऽ०ऽ०ऽ ॥ ४४ ॥

सर्वतालो विपर्यासादहिगतिः प्रकथ्यतौ ॥ ६६ ॥
ऽ।।ऽ०० ॥ ४५

विरामांतद्रुतौ यत्र चतुर्वारं हिमाचलः ॥
०ऽ०ऽ०००० ॥ ४६

नमजातो मणयौ मो विष्णुताले प्रकीर्त्तिताः ॥ ६७ ॥
।।।ऽ।।।ऽ।०ऽऽऽ।०ऽऽऽ.ऽऽऽ ४७

द्रुतो मात्राचतुर्वारं पक्षिराजाभिधानके ॥
०।०।०।०। ४८

गारुगिदीविरामश्च लौविरामश्च झोंबडे ॥ ६८ ॥
०००ऽ ४९॥ ऽ ५०

नीलझोंबडके ताले भगणः सर्वसंमतः ॥

SSSS५१

उत्तमा यत्र चत्वारो मात्राः कृतास्त्रयो लघु ॥ ६९ ॥
वलपौ सरलो बिंदुर्मात्रा स्याच्चक्रसंज्ञके ॥

०००० । ००० । ०० । ० ।५२

त्रिपुटे माख्यताले तु चत्वारो बिंदवो मताः ॥ ७० ॥

००००ổ०ổ०ổ००ổ०ổ ५३

दविरामस्त्रयः कृत्ता दविरामौ द्रुतौ मदौ ॥
दविरामे द्रुतश्चेति दविरामः पुनर्भवेत् ॥ ७१ ॥
लगौ वृत्ता त्रिरावृत्त्या लोदौ लोपगदौ लघुः ॥

।Sँ००० ।०० Sँ S०० ॥ ५४ ।

पगौ कृपौ विरामश्च दौ विरामो दसौ तथा ॥ ७२ ॥

। Sँ०००ổ००ổ०॥ S ॥ ५५ ।

इत्येताश्च स्वर्गमेरावदन्भरतादयः ॥
शंखस्य वाद्यरूपे तु सुवृत्तः सार्धमात्रकः ॥ ७३ ॥
त्रयो वृत्ता द्विमात्रेण सुवृत्तो लघुरित्यमी ॥

०।०००S००० ५६

अथ वादविरामौ च गपगौ अग्रेणकृतांगकल्पना॥७४॥
पादणुः करजात्यश्च संयोगेऽगानि वै जगुः ॥

Sँ S॥०० SS। ५७

त्रिवर्तके लघुद्वंद्वद्रुतद्वंद्वलघुद्वयम् ॥ ७५ ॥

॥००॥ ५८

दौलो नारायणे श्रीविष्णौ भगणः प्लुतः ॥

Sँ ००।S।०S।SS। S॥ Sँ ६०

लघुभ्यो च प्लुतेश्चैव. गद्यतालो निगद्यते ॥ ७६ ॥

Sँ॥Sँ ६१

दलदालविरामश्च नर्तने कथिता बुधैः ॥
ο।ο। ६२
द्रुतौगुरुर्दर्पणके लघुर्दौ यश्च मन्मथे ॥ ७७ ॥
οοऽ ६३ ॥ οο॥ऽऽ ६४
इति ताले लघुगौ च लकूपः सिंहलीलके ॥
॥ऽऽ६५ । οοο ६६
लघुर्बिंदुर्द्विमात्रश्च कथिता वीरविक्रमे ॥ ७८ ॥
οऽ ६७
चत्वारो बिंदवः पूज्याः कथितो रंगसंज्ञके ॥
οοοο ६८
श्रीरंगो लजयौ चैव प्रत्यंगो गतलास्तथा ॥
।ऽऽ।ऽ६९ऽऽऽ ७०
गलैः पैश्चतुरस्त्रः स्यात्रिभिन्नो लगपैस्तथा ॥ ७९ ॥
हंसं सूनौ मात्रिका च प्लुतौ बिंदू प्लुतोऽपि च ॥८०॥
।ऽऽοοऽ ७२
हयलीले विरामांतद्वंद्वं द्रुतौ पुनः पुनः ॥
οοοοο ७४
शरौ शरभलीले तु चत्वारो बिंदवो लघू ॥ ८१ ॥
॥οοοο७५
कंदर्पे तु द्रुतौ यश्च वर्णभिन्ने द्रुतौ लगौ ॥
οο।ऽऽ ७६ οο।ऽ ७७.
पतुपाः कोकिलाप्रीतौ पौगौ निःशंकनाम्नि च ॥ ८२ ॥
ऽऽऽοοऽऽ ७८
जलघ्रू स्तस्तथा बिंदुजयताले प्लुतो भवेत् ॥
॥ऽऽऽ ७९

यूपे योज्यः प्लुतो बिंदुर्दीर्घौ मात्राः शिखी पुनः॥ ८३॥
||ऽSS|| ८० ||०००||८१
प्रोक्तौ लमौ रतिताले विष्णुमते तु बिंदवः ॥
|SSS८२ ०००००|०० ८३
चत्वारः सरलो बिंदुर्गुरुरप्यत्र संमतः ॥ ८४ ॥
०००||८४
चर्चरी सा विरामांतद्रुतत्रयेण संमता ॥
ँँ०००८५
अनागतग्रहेणैव सर्वदा सर्वदायिनी ॥ ८५ ॥
||००|| ०८६
कंकाले तु पलौ प्रोक्तौ लौदत्र्यणू च चल्लके ॥
||SS|||०|| ८७
तलपारगावभरौ वद्रुतौ जयमंगले ॥ ८६ ॥
००००ँ|| ८८
नांदिले च विभू बिंदू सगणश्च द्विमात्रकः ॥
||००||SS| ८९
अनंगे लयसाः प्रोक्ता अभिनंद्य ल्घुद्वयम् ॥ ८७ ॥
|ऽS||ऽ| ९०
कूपद्रूपं त्रिमात्रश्च तालज्ञैः कथितो ध्रुवम् ॥
||००ऽ ९१
दत्रयं दविरामश्च विषमे तु तनस्तथा ॥ ८८ ॥
००|| ९२
ढेंकिका रगणेनैव दो लौ गौ चैव दीपके ॥
S|S ९३
लौ दौ पो नंदनाख्ये स्याद्गुरुणा बिंदुमालिका ॥८९॥
Sँ०||SS ९४

कूपैश्चतुर्भिर्गुरुणा महाचित्रे ह्यणुद्रुतौ ॥

००० ।।ऽऽ० ९५

अणवादिर्लविरामांतः परिवर्तः प्रकीर्तितः ॥ ९०

०० ।।ऽऽ० ।। ९६

विपर्यासाद्विवर्तः स श्रीकीर्तिर्गौर्लघू मतौ ॥

।।००० ।। ९७

लगपैर्येन कीर्तिः स्याज्जयश्रीर्गजगैस्तथा ॥ ९१ ॥

०००।०। ९८

यमकादेर्द्रुतौ नश्च हंसताले रमौ मतौ ॥

००० ।। ऽऽऽऽ० ९९

मल्लिकामोदताले तु लघुद्रुतचतुष्टयम् ॥ ९२ ॥

०ऽऽ १००

ललमैर्विजयानंदौ राजविद्याधुरंधरः ॥

विरामांतद्रुतौ चैव तथा निःसारुकेशनः ॥ ९३ ॥

ऽऽऽ००० ।। १०१

रोलघुविरामांतौ तथा प्रोक्तौ मुनीश्वरैः ॥

ऽऽ ।।। ००० १०२

शरो द्रुतौ शरं पूज्यं स्तो लौ कुमुद्वसंज्ञके ॥ ९४ ॥

ऽऽ ।।०० ।। १०३

लविरामोडोंबुलीलाख्ये तालके मात्रतालुके ॥

०००४० ।।५०० ।।६००७ ० ।। ८

मात्रया शिखिना भंगताल उक्तो मनीषिभिः ॥ ९५ ॥

।।।९०१०ऽ।११ऽ।

॥ इति भंगः ॥

रगणेन द्रुताभ्यां च रामकंकोलसंज्ञकः ॥

ऽ।ऽ०० १२

सामजश्च विरामांतौ द्रुतौ प्रजापशेखरे ॥ ९६ ॥

ऽ०० १३

वसंतसंज्ञके ताले लत्रयं गत्रयं तथा ॥

।।।ऽऽऽ

जगझंपकताले तु गुरुबिंदू विरामकः ॥ ९७ ॥

।ऽ०००० १४

चतुर्मुखे जपौ प्रोक्तौ दौ पूज्यो मदने तथा ॥

।।ऽ।।० १५

गदला रमरे ताले दविरामौ च तारके ॥ ९८ ॥

।।०० १६ ००० १७

विवारसंज्ञके ताले तगणो लविरामकः ॥

०००० १८ ००।ऽऽ १९

दविरामद्वयं सार्धमात्रः स्याच्छीलसंज्ञके ॥

००। २०

विरामांतद्रुतौ बाणौ गुरुश्चारेऽभिधीयते ॥ ९९ ॥

००।ऽ २१ इति चारः ॥

पार्वतीलोचनाख्ये तु मलयौ गा द्रुतावपि ॥

ऽऽऽ ।ऽऽऽ००।। २२

लीलातालद्रुतौ लौ गौ जयानंदे लपंचमः ॥ २०० ॥

००।।ऽऽ २३ ।। ।।ऽऽऽ २४

करणं यतिताले तु चत्वारो बिंदवो मताः ॥

०००० २५

विरामांतद्रुतद्वंद्वं स्याल्लक्ष्मीशे लघुः शिखी ॥ २०१ ॥

ऽ।ऽ० २६

द्रुतो बाणो द्रुते पूज्यो इत्येतल्ललिते मतम् ॥

०।०ऽ २७

राजी नारायणो बिंदू जगणश्च द्विमात्रकः ॥ २०२ ॥

।००।ऽऽऽ। २८

ललितप्रियतालस्तु लघुभ्यां रगणेन च ॥

॥ऽ।ऽ २९

श्रीनंदे तु द्विमात्रः स्याल्लविरामौ प्लुतोऽपि च ॥२०३॥

ऽ।ऽऽ ३०

नगणे नयसाभ्यां च गुरुणा जनको भवेत् ॥

॥ऽऽ॥ऽऽ ३१

अभंगे तु लघूपश्च शेखरे सरलौ मतौ ॥ २०४ ॥

॥ऽ ३२ ३३

कूपत्रयं त्रिमात्रश्च रामवर्धनसंज्ञके ॥

०००ऽ ३४

वर्धनः स्याद्द्रुताभ्यां च लघुना शिखिना तथा ॥२०५॥

००।ऽ३५

चतुस्ताले द्विमात्रं स्याद्बिंदवोऽपि लयो मताः ॥

॥०००३६

मुकुंदे सरलैः शून्यं मात्रिका सा सजोऽपि च ॥२०६॥

॥०।ऽ३७

चत्वारो लघवः प्रोक्ता गजताले विचक्षणैः ॥

॥॥०।३८

गजांगके द्रुतौ प्रोक्तौ द्रुतद्वंद्वं च कीर्तितम् ॥ २०७॥

०॥३९

मृगांके तु विरामादिद्रुतद्वंद्वं लघुर्भवेत् ॥

॥०० ४०

गलदै राजमार्तंडः सलपैस्तु कलध्वनिः ॥ २०८ ॥

००० ४१

पौ लो दौ च सरस्वत्याः कंठाभरणसंज्ञके ॥

ऽ०।० ४२

द्वे द्वे तु सतपाः प्रोक्ता लौ दौ चित्रपुटे लपौ ॥२०९॥

॥ऽ।ऽ ४३

पंचभिर्लघुभिर्गौरी सारसे दत्रयं लघु ॥

ऽऽ॥ ०० ४४

स्कंदे रौ दौ गुरू चैव द्युलेपावुत्सवौ तथा ॥२१०॥

॥ऽऽऽ० ४५

मस्ते द्रुतचतुष्कं च विरामांतं लघुत्रयम् ॥

००॥४६ ०॥ऽऽ००४७ ००४८००ऽऽ

ऽऽ ४९ ०००५०॥००००।।५१००५२

विलोकिते गददाः ज्ञेया स्थिता पद्मासलैस्तथा ॥२११॥

॥ऽ ५३

रंगप्रदीपके गश्च रगणः सामजोऽपि च ॥

ऽऽ।ऽऽ ५४

सुदर्शने च संप्रोक्ता बिंदवः षट्त्रिमात्रकाः ॥ २१२ ॥

०००००० ५५

सुदेवते विरामांतौ द्रुतौ नश्च प्रकीर्तितः ॥

०॑०॥ ५६

राजताले लयौ बिंदू दीर्घो मात्रा प्लुतोऽपि च ॥२१३॥

।ऽ००।ऽऽ ५७

रतौ वृत्तौ लघू शून्यत्रयं प्रोक्तं च मातृका ॥

००॥००० ५८

त्रिवृत्ते णविरामश्चाभंगे च दविरामकाः ॥ २१४ ॥

००ऽ। ५९ ऽ०।। ६०

॥ इत्यभंगः ॥

तालाः सूडादयो ज्ञेया ध्रुवादिवचनोदिताः ॥ २१५ ॥
ध्रुवो मठो रूपकं च संपस्त्रिपुटसंज्ञकः ॥
अष्टताल्येकतालीति सप्तानां लक्ष्मीति कथ्यते ॥२१६॥
षोडश स्युर्ध्रुवास्तत्र जयंतादिप्रभेदतः
जयंतकमलोत्साहौ व्रजमंगलविक्रमौ ॥ २१७ ॥
मधुरो निर्मलो भीमः कामोदश्चंद्रशेखरः ॥ २१८ ॥
ऊर्मीणः कुंतलः क्रीडातिकोले विजयोऽपरः ॥
वज्रेति च जयंते तु लविरामो लघुद्वयम् ॥ २१९ ॥

०० ६१

गुलदादविरामश्च लगौ कमलसंज्ञके ॥ २२० ॥

ऽ।ॕॕ।ऽ ६२

उत्साहे पलगाः प्रोक्ता लविरामो द्रुतस्तथा ॥१२१॥

०० ६३ ऽ।ऽ

लविरामो द्रुतौ स्यातां सरलौ व्रजमंगलौ ॥

।०।०। ६४

विक्रमे दविरामौ च लविरामौ लघुस्तथा ॥ २२२ ॥

०ॕ ६५

दविरामत्रयं दस्तु मधुरे च द्रुतो लघुः ॥

ॕॕॕ०ॕ ६६

लौ दौ लघुविरामौ च मात्रिका निर्मले तथा ॥२२३॥

॥००।।। ६७

द्रुतौ लघू विरामश्च लघुर्लघुविरामकः ॥
भीमताले लघुद्वंद्वकामोदे लविरामकः ॥ २२४ ॥

००।। ।। ६८

लघुदौ लविरामश्च सरलावपि कीर्तितौ ॥

।००। ६९

चंद्रशेखरताले तु द्रुतो दंडविरामलौ ॥ २२५ ॥
द्रुतो लघुविरामश्च लद्वयं कथितं बुधैः ॥
०।ो।०ो। ७०
उर्मी सो लद्वयं दश्च लविरामो द्रुतोऽपि च ॥२२६॥
विरामादिलघुद्वंद्वं कुंतले सरलो द्रुतः ॥
॥०ो।०ो। ७१
लविरामो द्रुतश्चापिलविरामो लघू अपि ॥ २२७ ॥
।०ो।०ो। ७२
क्रीडाताले द्रुतः प्रोक्तो दविरामस्त्रिमात्रिका ॥
द्रुतश्च दविरामोऽपि मात्रिका च पुनर्भवेत् ॥ २८ ॥
०ौ।०ौ। ७३
लघू दौ दविरामश्च लद्वयं तिलकाभिधे ॥
विजये दलदालश्च दविरामो लघुद्वयम् ॥ २२९ ॥
॥०ौ॥ ७४
द्रुतौ द्रुतविरामाश्च त्रयो वज्राभिधे मताः ॥
०।०ो ७५

॥ इति षोडश ध्रुवाः १६ ॥

षट्त्रिंशन्मंठतालाः स्युर्विजयादिप्रभेदतः ॥ २३० ॥
विजयः प्रथमश्चक्रो धनंजयविरामकौ ॥
०० ७६
सालंगः सालकालंपौ लपौ रविविचारकौ ॥ २३१ ॥
श्रीकंठो रंगमंडश्च षण्मंठ जयत्रिकः ॥
गीर्वाणः कमलश्चिलस्तारप्रतिविशालकौ ॥ २३२ ॥
कल्याणो वल्लभो वर्णः पुनर्भूर्मुद्रितस्तथा ॥
करालमंठः श्रीरंगो गंभीरो भिन्नसंज्ञकः ॥ २३३ ॥

कलिंगः पंचधाऽतस्य प्रेमः सत्यं प्रियस्तथा ॥
वारिमंठश्च संकीर्ण इत्येषां लक्ष्म कथ्यते ॥ ३४ ॥
सो लौ विजयमंठे च प्रथमे गदया स्मृता ॥
॥ऽ॥७७॥ ।० १ ।ऽ०ऽ २
लघुत्रयं च गश्चक्रे दलौ गपौ धनञ्जये ॥ ३५ ॥
॥ऽ ३ ०।ऽऽ ४
विरामे दो विरामश्च लदलालविरामकाः ॥
०ॅ।०। ५
द्रुतो बाणस्त्रयो वृत्ता बाणः सालगमंठके ॥ ३६ ॥
।०००। ६
दौ तनौ सरले प्रोक्तौ कीले दौ ले द्रुतौ लघू ॥
००ऽऽ।०॥ । ७
पंडौ शृंगीरवौ रो गौ लौ शब्दलचतुष्टयम् ॥ ३७ ॥
०।००॥८॥ ऽ।० ९ ऽ।ऽऽ॥। १०
लघुत्रयं द्रुतश्चैव विरामो लविरामके ॥
॥।ॅ ११
श्रीमंठे लौ सुवृत्ताश्च चत्वारो गद्वयं पुनः ॥ ३८ ॥
॥० ००००ऽऽ १२
रंगमंठे गुरू द्वौ गौ द्रुतौ च सरलस्तथा ॥
ऽ००ऽ०० १३
षण्मंठे गद्वयं बाणौ वशौ दलचतुष्टयम् ॥ ३९ ॥
ऽऽ॥।ॅ॥। १४
जयप्रिये जमात्रः स्याद्गीर्वाणे जगणः प्रगौ ॥
।ऽ। १५
कमले लौ दौ लौ दौ स्तश्चित्रे दौ पो द्रतस्तथा ॥ ४० ॥
॥ऽ।ऽऽ १६

तारः प्रोक्तो द्रुतौ बाणौ दौ लो दौ लौ विशालके ॥
।००॥००॥ १७
भौ शब्दं लचतुर्थं च ख्यातकल्याणमंठके ॥ ४१ ॥
००ऽ० १८
वल्लभे रगणः प्रोक्तो लौ दौ लो दौ तु वर्णके ॥
तुवर्णके पुनः संज्ञे बाणो शब्दलचतुष्टयम् ॥ ४२ ॥
मुद्रिते गो लघुर्गश्च पशब्दचतुष्टयम् ॥
कराले यो लघुः पूज्यो श्रीरंगे सतपा लघुः ॥ ४३ ॥
गम्भीरे तु गपौ प्रोक्तौ भिन्ने दौ लौ लदौ लघू ॥
कालिंगे तु द्रुतौ लौ च लौ दौ लौ पंचघातके ॥ ४४ ॥
प्रिये दलौ दश्च सत्ये लो दो लदौ लघुः ॥
प्रिये लदौ लघुश्चैव वारिमंठे जने स्मृतौ ॥ ४५ ॥
संकीर्णो लददा लश्च दौ लदौ लो ददौ तथा ॥
लदौ दलौ दलौ दौ च निःशब्दं लचतुष्टयम् ॥४६॥

॥ इति मंठाः ॥

सूपके दश्च लश्चैव झंपके दविरामलाः ॥
त्रिपुटे दबिरामो दौ लौ दौ लश्चाटतालिका ॥ ४७ ॥
सर्वदाऽतीव कालेन लघुनैकेन तालिका ॥

## इति सूडादितालाः ॥

## ॥ अथ माद्यष्टौ रिकाः ॥

अथाष्टौ माद्यरिकाः स्युस्तेषां लक्षणमुच्यते ॥ ४८ ॥
मादिके रिमनौ मो पः सरजाः स्युस्ततः परम् ॥
।ऽऽ० १९
नादिरिके नमौ मो पः सरजास्तगणस्ततः ॥ ४९ ॥
०००० २०

मादिरिक्के ममो नौ पः सरजास्तगणस्ततः ॥
०ऽऽ॥ २१
मादिरिक्के समौ नौ पः सरजाः स्युस्ततः परम् ॥५०॥
०००ऽ॥० २२
सादिरिक्के रमौ नो भौ परजाः स्युर्गणस्ततः ॥
रादिरिक्के रमौ नो भौ यसजाः सगणस्ततः ॥ ५१ ॥
ऽऽ।ऽ०० २३
जादिरिक्के जमौ नो भौ पसरास्तगणोऽपि च ॥
॥०ऽऽ॥ २४
तादिरिक्के तमौ नो भौ यसना जगणो भवेत् ॥ ५२ ॥
ऽऽ।ऽऽऽ २५

॥ इत्यष्टौ रिक्काः ॥

त्रयो बाणास्त्रयो बाणास्त्रयः पूज्याः प्लुतास्त्रयः ॥
वावृत्तौ गपुषे णो गौ सरलो दंतिसंज्ञकः ॥ ५३ ॥
महाव्याघ्रे प्लुतौ पूज्यौ सरलौ गपमात्रिकाः ॥
आदित्यग्रहाख्यानां तालानां लक्ष्म कथ्यते ॥ ५४ ॥
सूर्ये णः करजे बिंदुर्धनुर्द्रुतविरामकः ॥
धनुर्बाणोऽर्धचंद्रश्च लविरामोऽर्धचंद्रकः ॥ ५५ ॥
द्विमात्रः करजः शृंगी माला च गुरुगौ मजौ ॥
इंदौ बिंदुर्धनुश्चैव विरामो द्रुतो लघुः ॥ ५६ ॥
द्रुतो लघुविरामश्च द्रुतः पूज्यो द्रुतः शिखी ॥
०००ऽ।०।०ऽ २९
भौमे एवादिषट्कानि विरामव्यवधानतः ॥ ५७ ॥
आरंभे दविरामः स्यात्षट्सु तस्यैव वर्जनम् ॥
ऽ०ऽ०ऽ।ऽऽऽ ३०
सौम्ये मात्राधनुर्बिंदुर्बाणो मात्रा विरामदः ॥ ५८ ॥

मात्रा लघुविरामश्च विरामश्च लघुः शिखी ॥

।०।०।ऽ॒।।।ऽ।।ऽ। ३१

गुरौ लघुविरामश्च धनुर्लघुविरामदौ ॥ ५९ ॥

लविरामो विरामश्च लविरामो लघुः स्मृतः ॥

लविरामो द्विमात्रः स्याल्लविरामो प्लुतस्तथा ॥ ६० ॥

ो॰ो०॰ोोऽ ३२

शुक्रे दीर्घो धनुः पूज्यो बिंदुः पूज्यो विरामकः ॥

बाणश्च लविरामश्च द्विमात्रः सामजोऽपि च ॥ ६१ ॥

ऽ॰ऽ।ऽऽ॰ ३३

बाणौ दीप्तौ धनुर्दीप्तो बिंदुर्दीप्तो विरामपौ (?) ॥

शरयौ लविरामश्च सामजश्च द्विमात्रकः ॥ ६२ ॥

राहौ प्लुतौ धनुर्दीर्घे धनुर्लघुविरामपौ ॥

शरयौ लविरामश्च सामजश्च द्विमात्रकः ॥ ६३ ॥

ऽ०ऽ०ऽ॰ऽ।ऽऽऽ ३४

णहौ प्लुतौ धनुर्दीर्घौ धनुर्लघुविरामकः ॥

करजो लोऽर्धचंद्रश्च विरामांकुशदौ धनू ॥ ६४ ॥

ऽऽ०ऽ० ऽ।०।९०७ ३५

केतौ प्लुतौ द्रुतौ दीर्घौ द्रुतौ लघुविरामदौ ॥

लघुर्द्रुतौ विरामश्च सुवृत्तकरजावपि ॥ ६५ ॥

ऽ०ऽ।०॰०७ ३६

विजये गुरुबाणौ च प्लुताः पंचत्रयो नुताः ॥

ऽ।ऽऽऽऽ०००० ३७

कामधेनौ तु चत्वारः प्लुताः प्रोक्ता मनीषिभिः ॥६६॥

ऽऽऽऽ ३८

पुष्पबाणे दचत्वारो लचत्वारो गुरू प्लुतौ ॥

००००।। ।।ऽऽऽऽ ३९

चत्वारो गुरवो दीप्ताश्चत्वारः सरलौ द्रुतौ ॥ ६७ ॥
ऽऽऽऽऽऽऽऽऽऽ ॥ ०० ॥ ४०

इति पुष्पबाणः ॥

प्रस्तारानुक्रमेणैव ताला अप्यमिता मताः ॥
शास्त्रे मया प्रसिद्धाः स्युस्त एवात्र प्रदर्शिताः ॥६८॥

## अथ देशतालप्रकरणम् ॥

कथ्यन्तेंऽगानि चत्वारि देशे लक्षमितानि च ॥
अणुर्द्रुतो द्रुतश्चेति लघुर्गुरुक इत्यपि ॥ ६९ ॥
लक्षाक्रान्तो द्विमात्रः स्यात्तदर्धो लघुरुच्यते ॥
चतुर्थांशो द्रुतः प्रोक्तो ह्यणुः स्यादष्टमांशतः ॥ ७० ॥
भिंडिमालेषु पत्रैश्च हन्यते स्थावरं नृभिः ॥
सवेगं जंगमं हन्याद्रवाद्यंगेन संभृतम् ॥ ७१ ॥
यदग्रे षोडशांशेन भिंडिमालादियोगतः ॥
परदुर्गप्रवेशे तु देशे काले च हेतुना ॥ ७२ ॥
प्रकारोऽस्य मया नोक्तो ग्रंथविस्तरभीतितः ॥ ७३ ॥

इति श्रीकृष्णपंडितसुताहोबलपंडितविरचिते संगीतपारिजाते वाद्यतालकांडो द्वितीयः समाप्तः ॥ २ ॥

**समाप्तोऽयं संगीतपारिजातः ।**



